आपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. 216.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. 216.00

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

# GET OFF TO A FLYING START *with*



LION
## PREMIER® HB PENCILS

Supersmooth for effortless writing. Micronized lead for unbreakable points. Grace the desks of executives and others with style.




LION
## PINKY® PENCILS

Perfect classmates. Pretty & Practical. Colourful designs, strongly bonded lead for unbreakable points, give it an edge over the competition.








## LION Gee-flo® BALLPENS
**035 carbine** **050 carborite**

**Tungsten carbide tips.**
Made with Swiss technology.
Unbeatable points. Sharp. Smooth. Non-smudging. Race across the page. Choice of red, black and blue refills. Mini-marvels at a marvellous price.




**LION PENCILS LTD.**
95, Parijat Marine Drive, Bombay 400 002.

BENSON & HEDGES WORLD CUP 1992

**OFFICIAL LICENSEE OF THE WORLD CUP**

National-766

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## भूमेः संरक्षणम्

आगामिजूनमासस्य आरम्भे रियो डे-जनिरो इत्यत्र 'पृथिवी सम्मेलनं' प्रचलिष्यति। भूमेः संरक्षणार्थम् आयोजितस्य एतस्य विशिष्टस्य सम्मेलनस्य निर्णयाः कीदृशाः स्युः, कानि पदानि तेन निक्षिप्यन्ते इति सकुतूहलं पश्यन् अस्ति लोकः। एतस्मिन् सम्मेलने प्रपञ्चस्य सर्वेभ्यः कोणेभ्यः समागताः राष्ट्रियाः नायकाः भागं ग्रहीष्यन्ति इति तु एतस्य वैशिष्ट्यम्।

एषु दिनेषु वयं पत्रिकासु पश्यामः, वार्तासु शृणुमः वा– 'जगति औष्ण्यवर्धनम्' 'विषवायुमण्डलप्रसारः' 'ओझोनूरन्ध्राणि' 'परिसरे परिवर्तनम्' इत्यादीनि। एतेषाम् अर्थाः यद्यपि भिन्नाः स्युः तथापि ते परस्परविरुद्धाः विषयाः न। एतानि भाविनम् अपायम् एवं सूचयन्ति– 'भूमिः गतप्राणा इव जायमाना अस्ति। अचिरात् एव एषा धरित्री खण्डशः विभक्ता भवेत्, यदि इदानीन्तनाः भाविनः च जनाः एतस्याः संरक्षणार्थं सङ्गोपनार्थं च योग्यान् उपायान् अचिरात् एव न चिन्तयेयुः। इदानीं महता प्रमाणेन मारकस्य अङ्गराम्लवायोः प्रसारः प्रवर्धमानः दृश्यते, यश्च वायुः मानवान्, पशुपक्षिणः, सस्यानि चापि मारयितुम् अर्हति' इति।

प्राकृतिकी सुस्थितिः रक्षिता चेदेव मानवानाम् अस्माकं जीवनं सुखमयं स्यात्। किन्तु गतेभ्यः केभ्यश्चित् वर्षेभ्यः अविवेकपूर्णा अरण्यनाशनप्रवृत्तिः विशेषतः दृश्यते। वृक्षाः निर्विवेकं छिद्यन्ते, किन्तु तत्स्थाने नूतनानि सस्यानि न आरोप्यन्ते। अतः एव एषु दिनेषु जनाः बोध्यन्ते यत् कृतस्य अकृत्यस्य परिमार्जनार्थं सस्यद्वयम् आरोपणीयं, यदि एकं सस्यं कर्त्यते इति।

एतादृशीं योजनां कार्यान्वितां कर्तुं न शक्यते इति न। जनाः स्वप्रियाणां स्मरणार्थं यदि सस्यानि आरोपयेयुः तर्हि भावनाप्रकटनं परिसरसंरक्षणं चेति उभयम् अपि साधितं भवेत्। सद्यः उत्तरप्रदेशसर्वकारेण 'स्मृतिवनम्' इति योजना स्वीकृता, या च पूर्वोक्तं लक्ष्यं साधयेत्।

एषा काचित् उदात्ता योजना। सर्वे एतस्याम् आसक्तिं प्राप्य स्वकल्पनांशान् एतया मेलयित्वा एतां सफलां कुर्युः।

सम्पुटः–९ जून्–१९९२ सञ्चिका–३

प्रतिकृतिमूल्यं रू. ४-०० • वार्षिकं ग्राहकशुल्कं रू. ४८-००



वार्ताविशेषः

# साल्वडार्देशे शान्तिः



कस्मिंश्चित् देशे अन्तर्युद्धं यदि समाप्तं भवेत्, शान्तिः यदि स्थापिता स्यात् तर्हि महान् सन्तोषः एव खलु? मध्य-अमेरिकास्थे एल् साल्वडार्देशे एतादृशी परिस्थितिः दृश्यते इदानीम्। गतेभ्यः द्वादशवर्षेभ्यः तत्र सैन्यप्रधानसर्वकारस्य वामपक्षीयाणां गेरिल्लाजनानां च मध्ये अन्तर्युद्धं प्रचलत् आसीत्। एतस्य परिणामतः ७५,००० जनाः प्राणान् त्यक्तवन्तः आसन्।

प्रायः ४५० वर्षेभ्यः पूर्वं, स्पेनुतः आगताः जनाः स्थानीयान् अज़्टेक्जनान् पराजित्य तत्रैव स्थिराः अभवन्। तेषाम् एव शासनम् आरब्धं च। किन्तु नवदशशतकस्य प्रथमदशके स्पेनुशासनं तत्र समाप्तम्। १८२३ तमे वर्षे 'सेण्ट्रल अमेरिकन् फेडरेषन्' शासनं तत्र आरब्धम्। यस्य अङ्गानि आसन्– गोटेमाला, होण्डुरस्, निकरागुवा, कोस्टारिका इत्येतानि राज्यानि।

१५ वर्षाणि यावत् अनुवृत्ता एषा फेडरेषन्व्यवस्था अनन्तरकाले विफला जाता। ततः त्रयाणां वर्षाणाम् अनन्तरं-तन्नाम १८३८ तमे वर्षे – एल् साल्वडार् स्वतन्त्रं गणराज्यं जातम्। तत्र प्रजानां प्रधानवृत्तिः कृषिः एव। किन्तु कृषिभूमयः आढ्यकुटुम्बानाम् अधीनाः आसन्। ते कृषिकेभ्यः अधिकं धनं स्वीकुर्वन्ति स्म। शताधिकवर्षाणि एवम् एव प्रवृत्तानि। एतस्मिन् कालखण्डे तत्र बहूनि परिवर्तनानि अभवन्। सहस्रशः साल्वडार्प्रजाः होण्डुरस्देशं गत्वा तत्रैव वासम् आरब्धवन्तः। एतेन उभयोः देशयोः सम्बन्धः कलुषितः जातः। १९७० तमे वर्षे प्रवृत्तायां पादकन्दुक (फूट् बाल्) स्पर्धायां होण्डारस्जनाः साल्वडार्जनान् यदा जितवन्तः तदा घोरं युद्धम् आरब्धम्।

१९७२ तमे वर्षे जनरल् कार्लोस् रोमेरो अध्यक्षत्वेन निर्वाचितः अभवत्। तस्य सर्वाधिकारिप्रवृत्तितः तत्र आन्तरिकी अशान्तिः प्रसृता। गोरिल्लागणाः निर्मिताः अभवन्। अपहरणानि मारणानि च बहुधा प्रवृत्तानि। १९८० तमे वर्षे साल्वडार् राजधान्यां प्रसिद्धस्य धर्मगुरोः आस्कर् रोमेरोवर्यस्य हननम् अभवत्। तदा च तत्र अन्तर्युद्धम् आरब्धम्।

तस्मिन् एव वर्षे जोस् डुवार्टे अध्यक्षः जातः।

किन्तु निर्वाचनसमये यानि आर्थिक-पुनर्निर्माणादीनि आश्वासनानि दत्तानि आसन् तानि क्रियान्वितानि कर्तुं न शक्तवान् सः। व्याधिग्रस्तः अपि अभवत् सः। अतः तत्र हिंसाकृत्यानि नितरां प्रवृद्धानि। १९८९ तमे वर्षे तेन त्यागपत्रं समर्पितम्। अल्फ्रेडो क्रिस्टियानी नूतनः अध्यक्षः जातः। तस्य प्रयत्नानां फलतः तत्र संयुक्तराष्ट्रसङ्घेन शान्तिचर्चा आरब्धा। वर्षद्वयाभ्यन्तरे चर्चा फलिता अभवत् च।

साल्वडार्सर्वकारेण गते जनवरीमासे १६ दिनाङ्के नूतने सन्धिपत्रे हस्ताङ्कनं कृतम्। वामपक्षीयैः (F.M.L.N. जनैः) अपि एषः सन्धिः अङ्गीकृतः। एतस्य अन्वयः फेब्रवरीमासस्य प्रथमदिनाङ्कतः अभवत्। एवं तत्र शान्तिमार्गस्य नूतनः अध्यायः आरब्धः अस्ति। हस्ताक्षरसन्दर्भे संयुक्तराष्ट्रसङ्घस्य महासचिवः डा. बूत्रोस् गालीवर्यः सहर्षम् उक्तवान्– "एल्साल्वडार्देशे प्रसृता सुदीर्घा घोरान्धकारमयी रात्रिः समाप्ता" इति।

सन्धिप्रस्तावस्य प्रमुखाः अंशाः केचन– गेरिल्ला युद्धस्य परिसमाप्तिः, सैन्यबले ह्रासतासम्पादनम्, भूव्यवहारस्य संस्करणम्, न्यायपद्धतेः निर्वाचनपद्धतेः च परिष्कारः इत्यादयः।

यदा विद्रोहकार्यनिरताः मेक्सिकोतः स्वदेशम् आगताः तदा तेषां स्वागतं महता उत्साहेन अत्रत्यैः कृतम्। सर्वकारीयनेतारः ससन्तोषम् उक्तवन्तः यत् अस्मद्देशबान्धवाः समागताः इति।





# नित्यानन्दस्य मोक्षः

कल्याणपुरीनामके राज्ये किञ्चन दुर्गमम् अरण्यम् आसीत्। तत्र नित्यानन्दः नाम कश्चन मुनिः निवसति स्म। पुराणप्रसिद्धः दूर्वासाः इव एव आसीत् नित्यानन्दः। अल्पः दोषः दृष्टः चेदपि तस्य महान् कोपः भवति स्म। अनालोच्य एव शापं ददाति स्म सः।

कल्याणपुर्याः राजा सुदीपः। सः कदाचित् मृगयार्थम् अरण्यं गतवान्। मृगयां समाप्य सः विश्रान्त्यर्थं नित्यानन्दस्य आश्रमस्य पुरतः छायायाम् उपविष्टवान् आसीत्। उपवेशनशब्दात् नितरां कुपितः मुनिः नित्यानन्दः ''भवान् राक्षसः भवतु'' इति शापं दत्तवान्।

एवं राक्षसत्वं प्राप्य सुदीपराजः अरण्यतः बहिः आगतवान्। सर्वान् पीडयन् समग्रे देशे भीतिम् उत्पादितवान्। केचन अटविकाः सुदीपराजस्य आश्रमसमीपगमनं राक्षसत्वप्राप्तिं च दृष्टवन्तः आसन्। ते राजभटानां समीपं गत्वा सर्वं निवेदितवन्तः। भटानां द्वारा मन्त्री प्रदीपः महाराजस्य शापविषयं ज्ञातवान्।

प्रदीपः तत् दुर्गमम् अरण्यं गत्वा महता कष्टेन नित्यानन्दम् अन्विष्य नमस्कृतवान्। विनयेन प्रार्थितवान् च– ''महात्मन्, मुनिवर्य, सुदीपः उत्तमः राजा। तस्य परिपालने सर्वे कुशलिनः सन्ति। तादृशः राजा भवतः शापकारणतः राक्षसत्वं प्राप्य सर्वाः प्रजाः पीडयन् अस्ति। सुदीपस्य एकस्य कारणतः अनेके भयपीडिताः सन्ति। एतत् न उचितम् इति भाति। एतस्य परिहारोपायं वदतु कृपया'' इति।

तदा नित्यानन्दः मन्त्रिणं हसन् उक्तवान्– ''पूर्वं बहवः राक्षसाः ब्रह्मणः सकाशात् वरं प्राप्य बलशालिनः सन्तः

''भगिनी''



"भवतः वचनं श्रुतवतः मम हृदयं द्रवति। अतः भवन्तं एकं रहस्यं वदामि। इतः दक्षिणदिशि योजनदूरे एकं कालिकामन्दिरम् अस्ति। तस्य मन्दिरस्य अन्तः पुरुषप्रमाणकः काळीदेव्याः विग्रहः अस्ति। सामान्यः यदि पश्यति तर्हि सः हृदयस्तम्भनं प्राप्नयात्, तावान् भयङ्करः अस्ति विग्रहः। भवान् तत्र गत्वा 'भवत्या अपेक्षितं मम अङ्गम् अर्पयामि' इति देवीं भक्त्या प्रार्थयतु। तदा भवदिष्टं सिद्धं भविष्यति" इति।

प्रदीपः तावद्दूरं कष्टेन गतवान्। तत्र कालिकादेवालयः दृष्टः तेन। नित्यानन्देन यथा उक्तम्, तथा भयङ्करः एव आसीत् विग्रहः।

प्रपञ्चमेव पीडितवन्तः। अत्र ब्रह्मणः एव दोषः इति चिन्तयति वा भवान्? न खलु। जनाः स्वकर्मानुसारं फलम् अनुभवन्ति। अत्र अहं निमित्तमात्रम्। निमित्तकल्पनार्थं मया शापः दत्तः अस्ति। अतः विधिनियमानुसारमेव सर्वं प्रचलति" इति।

"मुनिवर्य, भवता उक्तं युक्तम् एव स्यात्। जनैः स्वकर्मानुगुणं फलम् अनुभोक्तव्यम् इति तु सत्यम्। किन्तु इदानीम् अस्माकं राज्ञः आवश्यकता अस्ति। अतः महाराजस्य शापनिवारणोपायं कमपि सूचयतु कृपया" इति प्रदीपः नित्यानन्दं साष्टाङ्गं नमस्कृत्य दैन्येन प्रार्थितवान्।

तदा नित्यानन्दः हसन् उक्तवान्—

किन्तु प्रदीपः किञ्चिदपि न भीतः। "जगदम्ब, दयामयि, अस्माकं राजा शापकारणतः राक्षसत्वं प्राप्तवान् अस्ति। सः मनुष्यत्वं यथा प्राप्नुयात् तथा करोतु कृपया। मम शरीरस्य किम् अङ्गं भवत्याः इष्टम् इति अहं न जानामि। किन्तु उत्तमम् अङ्गं शीर्षम् इति प्राचीनाः वदन्ति। अतः मम शिरः एव अर्पयामि भवत्यै" इति उक्त्वा कोषतः खड्गम् आकृष्य शिरः कर्तयितुम् उद्युक्तः।

अत्रान्तरे तीक्ष्णा कान्तिः तत्र सर्वत्र प्रसृता। प्रदीपः तं प्रकाशं द्रष्टुम् अशक्तः सन् नेत्रनिमीलनं कृतवान्। तस्मिन् समये— "अये, भक्ताग्रेसर, भवतः देशभक्तिं साहसं च दृष्ट्वा सन्तुष्टा अहम्। भवान् इतः साक्षात्

राजधानीं गत्वा सहस्रपृष्ठात्मिकाम् एकां कथां लिखतु। सा कथा सर्वैः सुलभतया अवगन्तुं योग्या स्यात्। कथा आन्तं रमणीया स्यात्। तां कथां सुदीपराजाय श्रावयति चेत् सः पुनः मानवरूपं प्राप्स्यति" इति देव्याः मुखतः वचनम् आगतम्।

तदा प्रदीपः उक्तवान्– "अयि मातः, अहं राजनीतिसम्बद्धान् बहून् ग्रन्थान् पठितवान् अस्मि। प्रजानां उपयोगयोग्यं किञ्चित् आधुनिकविज्ञानमपि अभ्यस्तवान् अस्मि। किञ्चित् वैद्यकीयमपि ज्ञातवान् अस्मि। किन्तु साहित्यक्षेत्रे मम आसक्तिः नास्ति। प्रवृत्तिः अपि नास्ति। एकमपि काव्यम् अहं न पठितवान्। अद्यावधि मया एकोऽपि श्लोकः न रचितः। एका लघुकथा वा न लिखिता। एतादृशः अहं कथं कथां लेखितुं शक्नोमि?" इति।

तादा देवी– "भोः, भवान् लोके बहुविधव्यवहारान् प्रतिदिनं पश्यति। विचित्रान् व्यवहारान् शृणोति। जनानां जल्पनम् अपि श्रुतवान् स्यात् एव। जल्पने कस्यापि अरुचिः न उत्पद्यते। अतः एतत्सर्वम् आधारीकृत्य द्वित्राणि काल्पनिकपात्राणि सृष्ट्वा दीर्घां कथां लिखतु। सर्वेऽपि भवतः कथां पठित्वा आनन्दम् अनुभवन्ति। तां कथां यदि सुदीपराजः शृणोति तर्हि सः शापविमुक्तः भवति। एषः मम अनुग्रहः इति चिन्तयतु" इति उक्तवती।

प्रदीपः राजधानीं प्रति गत्वा अहोरात्रम्





उपविश्य कथां लेखितुम् आरब्धवान्। एकमासाभ्यन्तरे तस्य कथालेखनं समाप्तम्। सा कथा सहस्रपृष्ठात्मिका आसीत्। प्रदीपः तत् पुस्तकं स्वीकृत्य सन्तोषेण सुदीपराजम् अन्विष्यन् गतवान्। बुभुक्षितः सुदीपराक्षसः प्रदीपं खादितुम् अग्रे आगतवान्। प्रदीपः धैर्येण उपविश्य– "अहो! रमणीया कथा, श्रोतव्यं सर्वैः" इति वदन् कथां पठितुम् आरब्धवान्।

अपरक्षणे एव मन्त्रजलेन सिक्तः इव सुदीपः तत्रैव निश्चलं स्थितवान्।

दीर्घकालं यावत् प्रदीपः कथां पठितवान्। रात्रिः आगता। प्रदीपः दीपं प्रज्वाल्य पठितवान्। क्रमशः समग्रां कथां पठित्वा समापितवान्। तदा प्रदीपस्य पुरतः राक्षसः नासीत्, अपि तु तस्मिन् स्थाने राजा सुदीपः स्थितवान् आसीत्। महाराजस्य सुदीपस्य मुखे मन्दहासः विलसति स्म।

अनन्तरं महाराजः सुदीपः मन्त्री प्रदीपश्च राजप्रासादं प्रविष्टवन्तौ। तत्र सुदीपः मन्त्रिणम् उक्तवान्– "भवता लिखितः ग्रन्थः विशिष्टः अस्ति। एतादृशान् एव ग्रन्थान् इतोऽपि लिखित्वा भवान् अस्मान् सन्तोषयतु" इति।

तदा मन्त्री प्रदीपः उक्तवान्– "महाप्रभो, ग्रन्थरचनायां मम प्रवृत्तिः नास्ति। देव्याः अनुग्रहेण भवतः शापविमोचनार्थम् एतं ग्रन्थं लिखितवान् अहम्। अहं भवतः शासनकार्ये साहाय्यं करिष्यामि एव। ग्रन्थलेखनार्थम् अन्यं कमपि नियोजयतु कृपया" इति।

अनन्तरं राजा सुदीपः आस्थानकवि-पण्डितान् आहूय उक्तवान्– "प्रदीपेन यादृशः ग्रन्थः लिखितः अस्ति तादृशाः एव ग्रन्थाः भवद्भिः लेखनीयाः" इति।

ते सर्वे तं ग्रन्थं पठित्वा उक्तवन्तः– "महाप्रभो, एतादृशग्रन्थान् वयं न लिखामः। न केवलं वयम्, सरस्वत्याः पूजकः कोऽपि एतादृशग्रन्थं लेखितुं न अङ्गीकरोति। तादृशः सारहीनः अयं ग्रन्थः" इति।

एतत् श्रुत्वा कुपितः सुदीपः प्रदीपेन लिखितस्य ग्रन्थस्य सहस्राधिकाः प्रतिकृतीः कारयित्वा सर्वेभ्यः वितरणं कृतवान्। तस्य

एव ग्रन्थस्य प्रतिकृतिं ये लिखित्वा दत्तवन्तः तेभ्यः शतं रजतनाणकानि दत्तवान्। 'एतादृशं ग्रन्थं ये लिखन्ति तेभ्यः दशसहस्रं रजतनाणकानि उपायनरूपेण दीयन्ते' इति उद्घोषितवान्।

वास्तविकः कविः पण्डितः वा कोऽपि दशसहस्रं रजतनाणकानि प्राप्तुं प्रयत्नं न कृतवान्। किन्तु सामान्याः बहवः एतदर्थम् उद्युक्ताः जाताः। तादृशैः लिखिताः अनुत्तमाभिरुचिप्रचोदकाः कथाग्रन्थाः बहवः निर्मिताः। एते ग्रन्थाः जनेभ्यः अरोचन्त। अतः ग्रन्थलेखकाः प्रभूतं धनं प्राप्नुवन्ति स्म।

एवम् एव कानिचन दिनानि गतानि। इदानीं कवीनां पण्डितानां च विषये अनादरः उत्पन्नः। अतः कवयः पण्डिताः च कदाचित् सम्भूय अनादरस्य कारणं चिन्तयन्तः निर्णीतवन्तः यत् एतस्य सर्वस्य कारणं नित्यानन्दमुनिः एव इति। "एतस्य परिहारः कथम् इति तम् एव पृच्छाम" इति उक्तवन्तः बहवः।

"सः शीघ्रकोपी इति श्रूयते। अस्मान् सर्वान् शपति चेत् कष्टं स्यात् खलु?" इति उक्तवान् कश्चन पण्डितः।

तदा अन्ये उक्तवन्तः— "अनादरं प्राप्य जीवनस्य अपेक्षया, अनुत्तमानां ग्रन्थानां पठनस्य अपेक्षया च शापप्राप्तिः अपि वरम् एव" इति।

अनन्तरं ते प्रदीपस्य कथाग्रन्थं स्वीकृत्य नित्यानन्दमुनेः आश्रमं गतवन्तः। यदा एते गताः तदा मुनिः ध्यानमग्नः आसीत्। एतेषां



सम्भाषणतः तस्य ध्यानभङ्गः जातः। किन्तु सः क्रुद्धः न जातः। मन्दहासपूर्वकं स्वागतवचनानि उक्त्वा तेषाम् आगमनस्य कारणं पृष्ट्वा ज्ञातवान्। अनन्तरं तैः आनीतं प्रदीपस्य ग्रन्थं हस्तेन गृहीत्वा दिव्यदृष्ट्या क्षणमात्रेण ग्रन्थसारं ज्ञात्वा सः उक्तवान्– "कविवर्याः, पण्डितोत्तमाः, मम कश्चन सन्देहः इदानीं निवृत्तः। अहं मोक्षप्राप्त्यर्थं बहोः कालतः तपः कुर्वन् अस्मि। किन्तु कोपः अत्र विघ्नायते स्म। कोपः कथमपि मत्तः दूरं न गच्छति स्म। अतः मोक्षप्राप्तिः अपि न भवति स्म। अहं कोपेन शापं ददामि स्म। ततः बहवः कर्मफलम् अनुभवन्ति स्म। किन्तु एषु दिनेषु कोपः मां न बाधते। एतत् कथं सिद्धम् इति चिन्तयन् आसम्। अद्य मया सर्वं ज्ञातम्" इति।

तदा कवयः पण्डिताः च आश्चर्येण उक्तवन्तः– "मुनिवर्य! कथम् एतत् सम्पन्नम् इति विवृणोतु कृपया" इति।

"भवन्तः बुद्धिमन्तः इत्यतः सङ्ग्रहेण वदामि चेत् अवगन्तुं शक्नुवन्ति इति भावयामि। जनैः कर्मफलस्य अनुभोगार्थं किमपि कारणम् आवश्यकम्। एतावत्पर्यन्तं मम कोपः तादृशं निमित्तं भवति स्म। किन्तु इदानीं सामान्यैः लिखिताः ग्रन्थाः एव निमित्तानि सन्ति। अतः मम शापस्य आवश्यकता नास्ति लोके। शापतः यत् फलं सिध्यति स्म तत् ग्रन्थपठनात् एव सिध्यत् अस्ति। अतः कोपः मत्तः दूरं गतः। इतः परं लोके शापादयः न भवन्ति" इति हसन् उक्तवान् नित्यानन्दमुनिः।

तावता आकाशतः एकं सुन्दरं विमानम् आगत्य तत्र स्थितम्। विमानस्थाः देवदूताः सशरीरं नित्यानन्दमुनिम् उन्नीय विमाने उपवेशितवन्तः। विमानम् उपरि अगच्छत्। उपरि गच्छन् नित्यानन्दमुनिः तत्र सम्मिलितान् उक्तवान्– "एतस्य ग्रन्थस्य कारणतः मया अनुभोक्तव्यानि कर्मफलानि समाप्तानि अभवन्। अतः मया मोक्षः प्राप्तः" इति। विमानं ततः अदृश्यम् अभवत्।





# माया-भवनम्

वीरगिरिराज्ये सर्वत्र सन्तोषस्य तरङ्गाः। आनन्दपरवशाः सन्तः गायन्ति केचन। नृत्यन्ति पुनः केचन। अन्ये केचन विविधानि वाद्यानि वादयन्ति। इतरे केचन साधुवादेन गीतनृत्यादिषु मग्नानाम् उत्साहं वर्धयन्ति। एवं समग्रे राज्ये विविधाः मनोरञ्जककार्यक्रमाः प्रचलन्ति।

महाराजस्य वीरसेनस्य एकमात्रपुत्री विद्यावती। तस्याः जन्मदिनोत्सवः आसन्नः अस्ति। अतः वीरगिरिराज्ये एवम् उत्साहः दृश्यते। जन्मदिनोत्सवार्थं सप्ताहमात्रम् अवशिष्टम् अस्ति। राजकुमारी एव युवराज्ञी भविष्यति इत्यतः प्रजाः तस्यां विशेषतः स्निह्यन्ति स्म।

जन्मदिनात् त्रिभ्यः दिनेभ्यः पूर्वं राजकुमारी विद्यावती सखीभिः, बन्धुमित्रैश्च सह आलयं गत्वा कालिकादेव्याः दर्शनं प्राप्य प्रत्यागच्छति स्म। प्रतिगमनसमये सा नगरस्य प्रधानमार्गेषु गच्छन्ती राजप्रासादं प्राप्नोति स्म।

यस्मिन् दिने राजकुमारी नगरस्य मार्गेषु गच्छति तस्मिन् दिने सर्वे मार्गाः विशेषतः अलङ्क्रियन्ते। रङ्गवल्ली, तोरणानि इत्यादीनि विरच्यन्ते। युवराज्ञ्याः दर्शनं प्राप्तुं जनाः मार्गम् उभयतः कुतूहलेन तिष्ठन्तः तां दृष्ट्वा धन्यतां प्राप्नुवन्ति स्म।

यस्मिन् दिने जन्मदिनोत्सवाचरणम् आरब्धव्यम्, तस्मिन् दिने राजभटैः डिण्डिमघोषपूर्वकं प्रसारितां वार्तां श्रुत्वा प्रजाः दिग्भ्रान्ताः। 'युवराज्ञी अकस्मात्



व्याधिग्रस्ता जाता अस्ति। अतः महाराजः जन्मदिनोत्सवाचरणम् अपाकृतवान् अस्ति' इति वार्ता प्रसारिता। एषा वार्ता वज्राघाततुल्या आसीत्।

वार्ताश्रवणतः सर्वाः प्रजाः निराशाकूपे पतिताः सन्ति। महाराजः वीरसेनः महाराज्ञी वज्रेश्वरीदेवी चापि किङ्कर्तव्यतामूढौ स्तः। इतः पूर्वं राजकुमारी अल्पेन अपि रोगेण ग्रस्ता न आसीत्।

एतादृशी सा अज्ञातपूर्वेण व्याधिना ग्रस्ता अस्ति इति तु महतः खेदस्य विषयः। रात्रौ शयनसमये सा हसन्मुखी एव शयनं कृतवती आसीत्। किन्तु पुनः अल्पे एव काले "हा हन्त!. हा, वेदना!" इति क्रन्दनं कुर्वती उत्थातुम् अपि अशक्नुवती अश्रूणि स्रावितवती आसीत्।

मुख्यपरिचारिका शालिनी राजकुमारीम् उत्थापयितुं प्रयत्नं कृतवती। विद्यावती महता कष्टेन कथमपि उत्थितवती। किन्तु दृढं स्थातुम् अशक्नुवती शय्यायां पतितवती। ततः सा न उत्थितवती। पार्श्वपरिवर्तनं कर्तुम् अपि न शक्नोति स्म सा। राजकुमार्याः एतां शोचनीयां दशां दृष्ट्वा शालिनी नितरां भीता।

शालिनीद्वारा वार्तां प्राप्य राज्ञी वज्रेश्वरीदेवी धावन्ती पुत्र्याः समीपम् आगतवती। म्लानपुष्पम् इव सुप्तायाः पुत्र्याः दशां पश्यन्त्याः तस्याः दुःखम् उद्गतम्। "वत्से! किं जातं भवत्याः?" इति वदन्ती आर्तस्वरेण क्रन्दनं कुर्वती अश्रूणि स्रावितवती राज्ञी। राज्ञ्याः आर्तस्वरं श्रुत्वा धावन् आगतः राजा वीरसेनः तत्रत्यां स्थितिं दृष्ट्वा दिग्भ्रान्तः।

क्षणद्वयस्य अनन्तरं सः इतिकर्तव्यतां स्मरन् 'राजवैद्यम् आनयतु' इति आदिश्य दूतं प्रेषितवान्।

राजवैद्यः आगत्य राजकुमारीं सम्यक् परीक्षितवान्। तस्याः शरीरे रोगलक्षणानि न दृष्टानि तेन। किन्तु राजकुमार्याः एषा दुर्दशा किमर्थम् इति तु न जानाति सः। अतः सः— "प्रभो, इदानीं युवराज्ञ्यै औषधं किमपि दातव्यं नास्ति। त्रीणि दिनानि परिशील्य

योग्या चिकित्सा कर्तुं शक्या। तावत् एषा विश्रान्तिसुखम् अनुभवतु। कदाचित् विश्रान्तिः एव औषधं भवेत्'' इति उक्तवान्।

राजा एतत् अङ्गीकृतवान्। राज्ञी वज्रेश्वरीदेवी आदिनं राजकुमार्याः पार्श्वे एव स्थितवती। राजकुमारी समीचीनां निद्रां प्राप्तवती।

सायं यदा राजवैद्यः आगतः तदा राजकुमारी नेत्रे उन्मील्य– ''महती श्रान्तिः अनुभूयते। बुभुक्षा तु सर्वथा नास्ति'' इति उक्तवती।

राजवैद्यः उक्तवान् यत् अद्य फलरसमात्रं दत्तं चेत् अलम् इति।



द्वितीये दिने अपि एवम् एव प्रवृत्तम्। किन्तु तस्मिन् दिने रात्रौ राज्ञया विचित्रः अनुभवः प्राप्तः। यदा सा नेत्रे निमील्य सुप्ता आसीत् तदा तया शीतलः स्पर्शः अनुभूतः। यदा नेत्रे उन्मीलिते तदा तया दृष्टं यत् कश्चन श्वेतः पिशाचाकारः मन्दं प्रकोष्ठात् बहिः गच्छन् अस्ति इति। तस्य आकारस्य मुखभागः न दृष्टः तया। सः पुरुषः उत स्त्री इत्यपि न ज्ञातम्। 'वातायनतः आगतां कौमुदीं दृष्ट्वा अहं पिशाचः इति भ्रान्ता स्याम्' इति चिन्तयित्वा राज्ञी नेत्रे निमील्य शयनं कृतवती।

पुनः अल्पे एव काले सः एव अनुभवः। शीतलः स्पर्शः अनुभूतः, श्वेताकारस्य निर्गमनं दृष्टं च। इदानीं राज्ञी नितरां भीता। सा झटिति उत्थाय उपविश्य राजानम् अपि उत्थाप्य स्वस्य विचित्रम् अनुभवं निवेदितवती।

सर्वं श्रुत्वा राजा– ''देवि, विद्यावत्याः परिस्थितिं स्मरन्ती भवती शयनं कृतवती। तन्द्रासमये कोऽपि स्वप्नः दृष्टः, तावदेव। कुलदेवतां स्मरन्ती निद्रां करोतु। काऽपि भीतिः मास्तु। राजकुमारी अचिरात् एव स्वस्था भविष्यति'' इति उक्त्वा राज्ञयाः सान्त्वनं कृतवान्।

अनन्तरदिने प्रातः राजवैद्यः आगत्य विद्यावत्याः परीक्षां कृतवान्। तस्याः अनारोग्यं तु यथापूर्वम् आसीत्। रोगस्य कारणं किम् इति ज्ञातुम् अशक्तः वैद्यः



द्वित्रविधानि बलवर्धकानि औषधानि दत्त्वा दिने त्रिवारम् एतानि चमसमितानि सेवनीयानि इति उक्त्वा ततः निर्गतवान्।

तृतीये दिने सूर्यास्तपर्यन्तम् अपि राजकुमार्याः आरोग्यं चिन्ताजनकम् एव आसीत्। अतः राजा सडिण्डिमम् उद्घोषितवान् यत् जन्मदिनोत्सवाचरणम् एतस्मिन् वर्षे न भविष्यति इति।

एषा वार्ता वज्राघाततुल्या आसीत्। गतेषु वर्षेषु कदापि एवं न जातम् आसीत्। प्रीतिपात्रराजकुमार्याः अनारोग्यस्य विषये प्रजाः नितरां चिन्ताक्रान्ताः जाताः। राजमार्गे तत्र तत्र गणरूपेण तिष्ठन्तः जनाः 'एवं स्यात्' 'एवं स्यात्' इति स्वयम् ऊहां कुर्वन्तः चर्चां कुर्वन्तः आसन्। केचन राजप्रासादस्य पुरतः एव सम्मिलिताः सन्तः अन्तर्भागतः का वार्ता आगच्छेत् इति प्रतीक्षमाणाः आसन्। भवनस्य अन्तर्भागतः बहिः आगच्छन्तः भटाः तु वदन्ति स्म– "विशेषवार्तां कामपि न जानीमः। उच्चैः वार्तालापः अत्र मास्तु" इति।

प्रासादस्य पुरतः प्रतीक्षमाणान् जनान् उद्दिश्य उक्तवान् कश्चन राजभटः– "इदानीं राजकुमार्याः आरोग्ये अल्पा उल्लाघता दृश्यते। सा इदानीम् उपवेष्टुं शक्नोति। श्वः राजकुमार्याः जन्मदिनोत्सवसन्दर्भे सर्वेषु देवालयेषु विशेषपूजा प्रचलतु इति आज्ञापितवान् अस्ति महाराजः। महाराजः स्वयं प्रधानज्योतिषिकस्य वाचस्पतिमिश्रस्य गृहं गतवान् अस्ति। अतः भवन्तः निश्चिन्ताः सन्तः गृहं गत्वा इष्टदेवतां प्रार्थयन्तु– 'राजकुमारी अचिरात् एव स्वस्था भवतु' इति। अत्र तु जनानां मेलनं न उचितम्" इति।

एतां वार्तां श्रुतवतां जनानां किञ्चिदिव तृप्तिः जाता। राजधान्यां प्रतिगृहं प्रतिदेवालयं विशेषपूजा प्रवृत्ता। एकैकः अपि इष्टदेवतां प्रार्थितवान् यत् राजकुमारी अचिरात् एव स्वास्थ्यं प्राप्य शतं वर्षाणि यावत् सुखेन जीवतु इति।

प्रधानज्योतिषिकः वाचस्पतिमिश्रः राज्ञा सह राजभवनम् आगत्य युवराज्ञ्याः जन्मकुण्डलीं सुसूक्ष्मं परिशील्य उक्तवान्–

''प्रभो, यदा एषा जन्म प्राप्तवती तदा एव मया जन्मकुण्डलीं परिशील्य उक्तम् आसीत् यत् षोडशे वर्षे कश्चन गण्डः अस्ति इति। तत् भवान् स्मरति इति मन्ये'' इति।

''आम्। तत् इदानीं स्मरामि। बाल्यतः अपि एतस्याः अल्पम् अपि अस्वास्थ्यं न आसीत्। इदानीम् अपि एतां परीक्ष्य राजवैद्यः उक्तवान् अस्ति यत् एतस्याः शरीरे व्याधेः चिह्नं किमपि न दृश्यते इति। किन्तु एतादृशी शोचनीया स्थितिः तु दृश्यते एव। न जाने, किमर्थम् एव जातम् इति। ग्रहाणां फलतः एवं जातं वा? ग्रहशान्तिः कारणीया वा मया?'' इति आतङ्केन पृष्टवान् राजा।

तदा पार्श्वे स्थिता वज्रेश्वरीदेवी– ''अद्य विद्यावत्याः जन्मदिनम्। प्रतिवर्षं तस्याः जन्मदिनं वैभवेन आचर्यते। एतत् आचरणं प्रजानाम् अपि प्रियम् आसीत्। स च उत्सवः नास्ति इति कारणतः समग्रे देशे खेदः प्रसृतः दृश्यते। एषा कदा वा यथापूर्वं स्वस्था भविष्यति? एतस्याः स्वास्थ्यलाभार्थम् अस्माभिः किं वा करणीयम्? कस्य ग्रहस्य कुदृष्टिः एतस्याः उपरि पतिता? आचार्य, वदतु तावत्– किं किं करणीयम् इति। भवान् यद्यत् वदति तत्सर्वं कर्तुं सिद्धाः वयम्'' इति उक्तवती।

वाचस्पतिमिश्रः पुनरपि जन्मकुण्डलीं परिशील्य गणनादिकं कृत्वा उक्तवान्– ''युवराज्ञ्याः जन्मकुण्डल्यां ग्रहाणां गतिः



इदानीं सम्यक् नास्ति। केषाञ्चित् दुष्टग्रहाणाम् उग्रदृष्टिः पतिता दृश्यते। अतः एषा परिस्थितिः आगता अस्ति। अग्रे अपि किं किं भवेत् इति स्पष्टं न ज्ञायते। एकादशदिनाधिकैकादशमासानाम् अनन्तरं सर्वं सम्यक् भविष्यति इति तु सुस्पष्टम्। तावत्कालम् एषा महत्या जागरूकतया रक्षणीया। अचिरात् एव अन्यस्मिन् सुरक्षिते भवने एतस्याः वसतिः कल्पिता चेत् वरं स्यात्। एतस्याः रक्षणविषये अल्पम् अपि औदासीन्यं न प्रकटनीयम्'' इति।

तदा राज्ञी अश्रुपूर्णनेत्रा सगद्गदम् उक्तवती– ''एतस्यां स्थितौ विद्यावतीं कथं वा प्रेषयेम? तीव्रम् अस्वस्थां पुत्रीं दूरं सम्प्रेष्य कथं वा जीवेम वयम्?'' इति।



आस्थानज्योतिषिकः किमपि उत्तरं वक्तुम् अशक्नुवन् मौनं स्थितवान्।

किञ्चित्कालानन्तरं राजा उक्तवान्– "राजधानीतः अनतिदूरे सारससरोवरे द्वीपे विश्रान्तिभवनम् अस्ति। ग्रीष्मकालस्य उपयोगार्थं निर्मितं तत्। तत्र विद्यावत्याः स्थापनं वरम् इति प्रतिभाति मम। तच्च स्थलम् अनतिदूरे अस्ति, सुरक्षितम् अपि अस्ति। प्रतिदिनं गमनागमने क्लेशः न भवेत्। तत्रैव सर्वाः व्यवस्थाः कल्पयिष्यामः वयम्" इति।

"तच्च सारसरोवरम् इतः आग्नेयदिशि एव अस्ति खलु?" इति पृष्टवान् प्रधानज्योतिषिकः।

"आम्" इति उक्तवान् राजा।

"एवं तर्हि तत्रैव राजकुमार्याः वसतिः कल्पनीया। अन्यः मुख्यविषयः यत् तत्र सा एकाकिनी तिष्ठेत्। मातापित्रोः दृष्टिः तां न स्पृशेत्। काचित् विश्वासार्हा परिचारिका तया सह तिष्ठति चेत् अलम्। आहारपानीयादिकं राजधानीतः एव प्रेषयितुं शक्यते। मासे एकवारं भवन्तौ तां सकृत् द्रष्टुम् अर्हतः। पुत्र्याः निमित्तं तपः क्रियमाणम् अस्ति इति भावयित्वा सर्वं शान्ततया सोढव्यम्। अन्यच्च एतादृशः क्लेशः न शाश्वतिकः, अपि तु अल्पकालिकः। ग्रहदोषाः यदा निवृत्ताः भविष्यन्ति तदा राजकुमारी यथापूर्वं भविष्यति। तदा एव विवाहयोगः अपि अस्ति। अतः भगवति भारम् आरोप्य सर्वं सुखान्तं भविष्यति इति भावयित्वा निश्चिन्तता प्राप्तव्या। यदा अहम् अत्र प्रस्थितः तदा जगत्पत्याचार्यः मम गृहं प्रति आगतः आसीत्। अहम् इतः गत्वा तेन सह समालोच्य प्रतिमासं राजकुमारी कदा द्रष्टुं शक्या इति निर्णेष्यामि" इति उक्त्वा ततः निर्गतवान् आस्थानज्योतिषिकः।

ज्योतिषिकस्य सूचनायाः अनुगुणं व्यवस्थाः आरब्धाः। युवराज्ञ्याः वासार्थं विश्रान्तिभवनं सज्जीकर्तुं भटाः गतवन्तः। बाल्यतः अपि विद्यावत्या सह स्थिता विद्यावत्याः अपेक्षानपेक्षादिकं जानती वृद्धा धात्री कमला एव तया सह प्रेषणीया इति

निश्चितवती राज्ञी। राजकुमार्याः परिचारिकायाः च निमित्तं प्रतिदिनम् आहारं नेतुं षट् सेविकाः नियुक्ताः।

प्रधानज्योतिषिकस्य सूचनायाः अनुगुणं राजकुमारी विद्यावती अर्धरात्रसमये शिबिकायाम् उपविश्य राजप्रासादतः प्रस्थितवती। राजा राज्ञी च सिंहद्वारपर्यन्तम् आगत्य तां प्रेषितवन्तौ। राजकुमारीं वृद्धधात्रीं कमलां च सारससरोवरं प्रापय्य आगतवत्यौ अन्ये परिचारिके।

सरोवरतीरतः राजकुमारीं वृद्धधात्रीं कमलां च नौकायाम् उपवेश्य मध्यस्थस्य विश्रान्तिभवनस्य समीपं नीत्वा तयोः भवनप्रवेशं दृष्ट्वा तीरं प्रत्यागत्य सर्वाः वार्ताः राजधानीं प्रति प्रेषितवान् नाविकः।

प्रीतिपात्रपुत्र्याः वियोगं सोढुम् अशक्नवन्तौ राजा राज्ञी च हृदयस्थशोकेन दह्यमानौ स्तः। परस्परं सान्त्वनवचनानि वदन्तौ कालं यापयतः तौ। 'राजकुमार्याः दर्शनार्थं योग्यं मुहूर्तं कदा सूचयेत् ज्योतिषिकः?' इति चिन्तयन्तौ तौ प्रधानज्योतिषिकस्य आगमनं प्रतीक्षमाणौ स्थितवन्तौ।

युवराज्ञ्याः काः स्थितिः, का व्यवस्था कृता इति वार्तां समग्रे देशे प्रसारयितुं व्यवस्थां कृतवान् राजा। भटाः सडिण्डिमघोषं वार्तां प्रसारितवन्तः यत् अगामिवर्षे राजकुमार्याः जन्मदिनोत्सवः द्विगुणितेन वैभवेन आचर्यते। अतः प्रजाः चिन्तां परित्यज्य कर्तव्यनिरताः भवेयुः इति।

एतां वार्तां श्रुत्वा प्रजाः किञ्चिदिव समाश्वस्ताः अभवन्। प्रजाः दैनन्दिनकार्येषु निरताः अभवन्। एवं शोकच्छाया मन्दम् अपगता।

किन्तु अल्पे एव काले अन्या आघातकरी वार्ता आगता यत् विश्रान्तिभवनस्था राजकुमारी कुत्रापि न दृश्यते इति। एतां वार्तां श्रुत्वा प्रजाः दिग्भ्रान्ताः! 'हा हन्त!' 'अहो, विधिवैपरीत्यम्' इत्येवं वचनानि निर्गतानि प्रजानां मुखतः। —(अनुवर्तते)





# गुरुदक्षिणा

सर्वस्यापि अपेक्षया कथाश्रवणम् एव श्रेष्ठम् इति भावयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! प्रतिदिनं समये भवतः आगमनं, मध्यरात्रे श्मशानमार्गे गमनं, पराजयं प्राप्य अपि यथापूर्वं स्थितिः इत्यादयः नितरां श्लाघ्याः एव। महतः कार्यस्य साधनार्थं भवान् एतत्सर्वं कुर्वन् स्यात्। किन्तु कार्यस्य फलं प्राप्यते एव इति किं भवतः विश्वासः अस्ति? कदाचित् भवता फलं न प्राप्येत। अथवा कदाचित् प्राप्तम् अपि फलं भवान् स्वयं निराकुर्यात्। एतादृशप्रवृत्तिमन्तः बहवः दृश्यन्ते लोके। पूर्वं नन्दकुमारः नाम कश्चित् अपि एवम् एव व्यवहृतवान्। भवतः मार्गायासस्य परिहारार्थं नन्दकुमारस्य कथां श्रावयामि। श्रद्धया

## वेतालकथा



शृणोतु तावत्'' इति।

अनन्तरं बेतालेन कथा आरब्धा–

पूर्वम् अनूपपुरनामकं देशं शूरसेनः नाम राजा पालयति स्म। तस्य मन्त्री बृहस्पतिः इव बुद्धिमान् आसीत्। सर्वेषु सन्दर्भेषु राजा मन्त्रिणा सह समालोच्य एव कार्यप्रवृत्तः भवति स्म। अतः तदीयं शासनम् अत्युत्तमम् आसीत्।

दौर्भाग्यवशतः सः मन्त्री अकालमृत्युं प्राप्तवान्। राजा नूतनं मन्त्रिणं चित्वा तस्य मार्गदर्शनस्य अनुगुणं राज्यपालनं कृतवान्।

नूतनः मन्त्री राज्ञः प्रीतिं सम्पादयितुं यद्यपि शक्तवान्, तथापि शासनकार्ये योग्यं मार्गदर्शनं कर्तुं न शक्तवान्। यतः तादृशी बुद्धिपरिपक्वता न आसीत् तस्य। अतः यथामति उपायान् सूचयति स्म सः। तस्य परिणामतः शासनकार्याणि अस्तव्यस्तानि अभवन्। केचन एतं विषयं राजानं निवेदितवन्तः।

तदा राजा उक्तवान्– ''मन्त्री नूतनः इत्यतः एवं सर्वम् अस्तव्यस्ततया प्रचलति इति तु भवतां भ्रमः। मन्त्रिणा सह समालोच्य स्वयम् अपि विचिन्त्य अहं कार्यप्रवृत्तः भवामि। अतः शासनकार्ये कोऽपि लोपः नास्ति एव। यदि अल्पः दोषः स्यात् तर्हि अपि सः अल्पे एव काले सम्यक् भविष्यति'' इति।

राजगुरुणा अपि शासनव्यवहारे जायमानः लोपः ज्ञातः। अतः सः अपि गत्वा राजानम् एतं विषयं निवेदितवान्।

तदा शूरसेनः हसन्– ''आर्य! पूजाध्यानादिषु धार्मिककार्येषु भवतः यावत् नैपुण्यम् अस्ति तावत् शासनकार्येषु नास्ति खलु? दिवङ्गतः मन्त्री यदा स्वकार्यम् आरब्धवान् तदा अपि केचन एवम् एव उक्तवन्तः। अनन्तरकाले सर्वं सम्यक् एव जातं खलु? तथैव इदानीम् अपि भविष्यति'' इति उक्तवान्।

राजगुरुः उत्तरं किमपि वक्तुम् अशक्नुवन् मौनं ततः भूतपूर्वमन्त्रिणः गृहं गतवान्। तत्र भूतपूर्वमन्त्रिणः विधवा पत्नी राजगुरुम् आदरेण स्वागतीकृत्य आसनदानेन सत्कृत्य नमस्कृत्य विनयेन पार्श्वे



स्थितवती।

तदा राजगुरुः उक्तवान्– "अम्ब! भवत्याः पत्यौ विश्वस्य राजा शूरसेनः सम्यक् राज्यशासनं करोति स्म। मन्त्रिस्थाने यः भवति सः प्रतिभावान् समर्थः भवति इति चिन्तयति राजा। किन्तु इदानीम् असमर्थः कश्चित् मन्त्रिस्थाने तिष्ठन् असमीचीनाः सूचनाः यच्छन् अस्ति। अतः देशस्य हानिः जायमाना अस्ति। प्रियवचनानि वदन् नूतनः मन्त्री राजानं वशीकृत्य स्वस्थानं स्थिरीकृतवान् अस्ति। मन्त्रिणः वचनस्य अनुगुणं केवलं, राज्यपालनं न उचितम् इति राजा न जानाति। एतादृश्यां स्थितौ देशहितार्थं कोऽपि समीचीनः उपायः चिन्तनीयः एव। भवत्याः पुत्रः नन्दकुमारः इदानीं दशवर्षीयः खलु? तं भवती चण्डकारण्यस्थं ज्ञानधनस्य गुरुकुलं प्रति प्रेषयतु। ज्ञानधनः सर्वाः विद्याः बोधयित्वा भवत्याः पुत्रः मन्त्रिस्थानम् अलङ्कर्तुं समर्थः यथा स्यात् तथा करिष्यामि। सामर्थ्यं प्राप्य भवत्याः पुत्रः यावत् अत्र न आगमिष्यति तावत् देशे सुखं न भविष्यति" इति।

भूतपूर्वमन्त्रिणः पत्नी राजगुरोः वचनम् अङ्गीकृतवती। अनन्तरदिने एव सा स्वपुत्रं ज्ञानधनस्य गुरुकुलं प्रति प्रेषितवती।

ज्ञानधनः नन्दकुमारस्य मुखात् आगमनकारणं ज्ञात्वा उक्तवान्– "वत्स! ज्ञानार्जनमात्रेच्छया गुरुकुलं प्रति आगन्तव्यम्। पदव्यादिप्राप्तीच्छया अत्र आगमनं न उचितम्" इति।

तदा नन्दकुमारः ज्ञानधनं विनयेन नमस्कृत्य– "गुरुवर्य! मम पिता राजानं योग्यं मार्गं सूचयन् बहुधा उपकरोति स्म। तेन देशस्य महत् हितं सिद्धम्। तदा राजा चिन्तितवान् यत् मन्त्रिणा यः मार्गः सूच्यते सः उत्तमः एव भवति इति। एतेन देशस्य अहितं जायमानम् अस्ति। एवं स्थिते देशस्य हितस्य चिन्तनं मया कृतं चेत् न कोऽपि दोषः खलु? समर्थः मन्त्री स्वमार्गदर्शनतः राजा कार्याकार्यविवेकं यथा प्राप्नुयात् तथा करोति। यदि मम पित्रा तथा न कृतं स्यात् तर्हि तथा करणं पुत्रस्य मम कर्तव्यम्। एवं



कर्तव्यबुद्ध्या अहम् उक्तवान् यत् मन्त्रिपदवी प्राप्तव्या मया इति। राजगुरुः अपि माम् उक्तवान् अस्ति यत् भवता भाविनि काले मन्त्रिपदम् अलङ्करणीयम् इति। अतः कर्तव्यबुद्ध्या, राजगुरोः आदेशानुसारं च अहम् अत्र आगतवान् अस्मि," इति उक्तवान्।

नन्दकुमारस्य वचनानि श्रुत्वा ज्ञानधनः आशिषा अनुगृह्णन्– "वत्स! तेजस्वी बालः भवान्। एतस्मिन् एव वयसि महान् विवेकः दृश्यते भवति। मम आशयः यत् भवान् सर्वाणि शास्त्राणि अधीत्य गुरुकुल-निर्वहणभारं वहेत् इति। भवान् कर्तव्यबुद्ध्या राजगुरोः आदेशं पालयन् च अत्र आगतवान् स्यात्। किन्तु पदव्यादीनां प्राप्तेः इच्छया यः विद्याभ्यासं करोति सः सर्वथा निष्प्रयोजकः भविष्यति। एतत् सदा स्मरतु" इति उक्तवान्।

नन्दकुमारः गुरोः वचनं विनयेन अङ्गीकुर्वन् तं नमस्कृतवान्। तस्मात् एव दिनतः तदीयः विद्याभ्यासः आरब्धः। गुरुः ज्ञानधनः तं सर्वाणि शास्त्राणि बोधितवान्। एवं वर्षत्रयाभ्यन्तरे नन्दकुमारः गुरुकुल-च्छात्रेषु अग्रगण्यः जातः।

कदाचित् गुरुः ज्ञानधनः सर्वान् छात्रान् मेलयित्वा उक्तवान्– "भवत्सु एतस्य रमाकान्तस्य प्रगतिः शून्यप्राया दृश्यते। मया एतावन्ति वर्षाणि पाठितानि चेदपि तेन तु किमपि न गृहीतम्। मम सर्वोऽपि प्रयत्नः व्यर्थः जातः। भवत्सु यदि कश्चित् तस्य पाठनभारं निर्वहेत् तर्हि वरं स्यात् इति भाति मम। यः तं बुद्धिमन्तं करिष्यति तम् अग्रे गुरुकुलस्य प्रधानाचार्यं करिष्यामि" इति।

एतत् श्रुत्वा नितरां क्रुद्धः रमाकान्तः उत्थाय– "मत्सदृशस्य सामान्यस्य बालस्य सकाशात् विद्यां ग्रहीतुं न आगतवान् अहम्। भवान् मम अपमाननं कृतवान्। धिक् भवन्तम्। धिक् भवतः गुरुकुलम्" इति उक्त्वा ततः निर्गतवान्।

तस्य निर्गमनम् एव किञ्चित्कालं दृष्ट्वा दीर्घं निःश्वस्य– "मन्त्रिपदवी प्राप्तव्या इति भावनां मनसि निधाय रमाकान्तः अत्र आगतः

आसीत्। अतः तेन न किमपि गृहीतम् अत्र" इति उक्तवान् ज्ञानधनः।

ततः वर्षद्वयस्य अनन्तरं नन्दकुमारस्य विद्याभ्यासः समाप्तः। सः गुरुं नमस्कृत्य पृष्टवान्– "गुरुदक्षिणारूपेण किं दद्याम्?" इति।

"गुरुकुलनिर्वहणभारं वहामि इति वचनं ददातु। सा एव भवत्तः अपेक्षिता गुरुदक्षिणा" इति उक्तवान् ज्ञानधनः।

तदा नन्दकुमारः उक्तवान्– "गुरुवर्य! माता एव प्रथमा गुरुः। अतः मातृस्थानम् एव श्रेष्ठम् इति शास्त्राणि वदन्ति। मातुः आदेशः पालनीयः अस्ति मया। एवं स्थिते अपि यदि भवान् वदेत् गुरुकुलचालनभारः एव निर्वोढव्यः इति, तर्हि तदर्थं सिद्धः अहम्" इति।

गुरुः ज्ञानधनः नन्दकुमारम् आशिषा अनुगृह्य– "वत्स! अल्पे एव वयसि महत् पाण्डित्यं सम्पादितम् अस्ति भवता। भवतः ज्ञानं राजभवनमात्रे राजमात्राय वा उपयुक्ता न भवेत्। भवतः ज्ञानतः बहवः उपकृताः स्युः। तदा एव जीवनस्य सार्थक्यम्। अस्तु तावत्, मया या गुरुदक्षिणा इष्टा सा पूर्णेन मनसा अर्पणीया। अतः इदानीं भवत्तः तां गुरुदक्षिणां न इच्छामि। गच्छतु यशःप्राप्तये" इति उक्तवान्।

नन्दकुमारः ततः राजधानीम् आगतवान्। तत्र सः ज्ञातवान् यत् इदानीं शूरसेनराजः



शय्याम् आश्रितवान् इति, त्रिभ्यः वर्षेभ्यः तदीय पुत्रः वीरसेनः राज्यभारं निर्वहन् अस्ति इति च।

वीरसेनस्य महान् अहङ्कारः आसीत्। अहं सर्वज्ञः इति भावयति स्म सः। मन्त्रिप्रभृतयः मम मार्गदर्शनं कर्तुम् असमर्थाः, मया उक्तम् अङ्गीकारेण समर्थयिष्यान्ति ते,तावदेव इति चिन्तयति स्म सः। मन्त्री अस्ति चेत् जनाः शासनम् अङ्गीकुर्वन्ति इत्यतः मन्त्रिणम् इच्छति सः। पितुः साहाय्यकः मन्त्री असमर्थः इति पितुः मुखात् एव सः श्रुतवान् आसीत्। अतः सः उद्घोषितवान् यत् नूतनः मन्त्री आवश्यकः इति।

नन्दकुमारः यदा गृहं गतः तदा माता



समग्रां परिस्थितिं निवेद्य– "वत्स! समये उपस्थितः भवान्। राजा वीरसेनः श्वः नूतनं मन्त्रिणं स्वीकरिष्यति। श्वः भवान् राजानं दृष्ट्वा मन्त्रिपदं प्राप्नोतु। 'उत्तमः मन्त्री' इति ख्यातिं प्राप्नोतु च" इति उक्तवती।

किन्तु दौर्भाग्यवशतः रात्रौ नन्दकुमारः तीव्रेण ज्वरेण ग्रस्तः अभवत्। सप्ताहं यावत् ज्वरः अनुवृत्तः। औषधादिसेवनया सः सप्ताहानन्तरं स्वस्थः जातः। तदा राजगुरुः आगत्य तम् उक्तवान्– "नूतनः मन्त्री चितः महाराजेन। भवान् गृहम् आगतः इति वार्ता मया विलम्बेन ज्ञाता। किन्तु इदानीम् अपि कालः अतीतः इति न। भवान् मया सह आगच्छतु। राजा मम वचनेषु इतोऽपि आदरवान् अस्ति। अतः अहं तं वदामि यत् मन्त्रिद्वयं भवतु" इति। तदा राजा भवन्तं मन्त्रिणं करिष्यति। मन्त्रिपदं प्राप्तं चेत् देशहितं किमपि साधयितुं शक्येत" इति।

नन्दकुमारः एतत् अङ्गीकृत्य– "अहं प्रथमं नूतनं मन्त्रिणं द्रष्टुम् इच्छामि" इति उक्तवान्। अनन्तरं तौ नूतनस्य मन्त्रिणः समीपं गतवन्तौ। नूतनः मन्त्री न अन्यः, अपि तु रमाकान्तः एव।

परस्परं कुशलप्रश्नानाम् अनन्तरं रमाकान्तः राजगुरोः मनसि स्थितं भावं जानन् इव उक्तवान्– "मित्र! बाल्यतः अपि भवान् मन्त्रिपदवीम् इच्छति स्म इति अहं जानामि। अतः आवाम् उभौ अपि मन्त्रिणौ सन्तौ राज्ञः साहाय्यं करिष्यावः। भवता सह मन्त्रिरूपेण कार्यकरणं ममापि सन्तोषाय" इति।

तदा नन्दकुमारः उक्तवान्– "मित्र! मन्त्रिपदवीं न इच्छामि अहम्। अभिनन्दनवचनानि वक्तुम् आगतः अस्मि अहम्। गुरुकुलचालनभारः मया वोढव्यः इति गुरोः इच्छा। तस्य वचनं तिरस्कर्तुं न इच्छामि अहम्। अतः अहम् इदानीं चण्डकारण्यं गमिष्यामि" इति। ततः गृहं गत्वा मात्रा सह चण्डकारण्यस्थं गुरुकुलं गतवान् सः।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! मातुः वचनस्य पालनम् एव श्रेष्ठम् इति उक्त्वा आगतः नन्दकुमारः किमर्थं

मन्त्रिपदं निराकृतवान्? असमर्थेन रमाकान्तेन सह कार्यकरणम् अगौरवकरम् इति चिन्तितवान् वा सः? राजा असमर्थः चेदपि मन्त्री समर्थः चेत् देशस्य हितं सेत्स्यति। एतत् कथं न अवगतवान् नन्दकुमारः? अथवा महापण्डितः सन् अपि सः देशहितकार्ये उपेक्षां प्रकटितवान् स्यात् वा? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''भवतः ज्ञानं राजमात्रस्य उपयोगाय मा भवतु, बहूनाम् उपयोगाय भवतु इत्येतत् गुरोः वचनं विनयेन निराकृत्य आगतवान् नन्दकुमारः इति तु सत्यम् एव। मातुः राजगुरोः च वचनं पालयितुम् एव सः तथा कृतवान्। किन्तु नूतनः राजा वीरसेनः येन क्रमेण मन्त्रिणं चितवान् तं क्रमं दृष्ट्वा नन्दकुमारः पुनः चिन्तनं कृतवान्। राजा अहङ्कारी सन् अपि यदि विवेकी स्यात् तर्हि मन्त्री योग्येन मार्गदर्शनेन सर्वं समीकुर्यात्। किन्तु राजा एव यदि अविवेकी तर्हि मन्त्री समर्थः सन् अपि किमपि साधयितुं न शक्नोति। राजा वीरसेनः आत्मानं सर्वज्ञं भावयन् रमाकान्तं मन्त्रिपदे नियोजितवान् अस्ति। मन्त्रिणि सर्वथा अनादरः इति जनाति एव नन्दकुमारः। यदि तेन मन्त्रिपदम् अङ्गीकृतं स्यात् तर्हि तदीयं पाण्डित्यं प्रतिभा च व्यर्थम् अभविष्यत्। एतत् अनिच्छन् सः गुरुकुलचालनभारम् अङ्गीकृतवान्। स्वशक्त्यनुगुणं यद्यत् कर्तुं शक्यते तत्सर्वं कृतवान् अस्ति सः। यदा शासकः असमर्थः भवति तदा प्रजासु विवेकस्य जागरणं करणीयम्। तादृशं कार्यं कर्तुं समर्थाः विवेकिनः बहवः अपेक्षिताः। तादृशानां निर्माणं करणीयम् इति निश्चित्य गुरुकुलं गतवान् नन्दकुमारः'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# वास्तविकं स्वरूपम्

श्रीपुरस्य भूस्वामिनः प्रवृत्तिः आसीत् यत् उद्योगम् अपेक्ष्य यः तस्य समीपम् आगच्छति तं त्रीन् प्रश्नान् पृच्छति सः। तृप्तिकरम् उत्तरं यः वदति तम् उद्योगे नियोजयति। कदाचित् भूस्वामिनः प्रश्नाः सुलभाः भवन्ति स्म। पुनः कदाचित् नितरां कठिनाः।

कदाचित् रुद्रः नाम बधिरः उद्योगम् इच्छन् भूस्वामिनः समीपम् आगतवान्। भूस्वामी तस्य परीक्षार्थं प्रथमं प्रश्नं पृष्टवान्– "तत् किम्, यत् नष्टं चेदपि पुनः प्राप्तुं शक्यते?" इति।

"धनम्" इति उक्तवान् रुद्रः।

"तत् किं, यत् सकृत् नष्टं चेत् पुनः प्राप्तुं न शक्यते?" इति पुनः पृष्टवान् भूस्वामी।

"रात्रिः दिनं च" इति उत्तरम् उक्तवान् रुद्रः।

"उपकारं प्राप्तवान् कश्चित् कियत्कालं कृतज्ञताभावेन युक्तः स्यात्?" इति पृष्टवान् भूस्वामी।

"आजीवनम्" इति उत्तरं दत्तवान् रुद्रः।

सन्तुष्टः भूस्वामी रुद्रम् उद्योगे नियोजितवान्। किन्तु अल्पे एव काले तेन ज्ञातं यत् रुद्रः बधिरः इति।

अतः सः आश्चर्येण उच्चस्वरेण रुद्रं पृष्टवान्– "तस्मिन् दिने भवान् मम प्रश्नानाम् उत्तरं कथं दत्तवान्?" इति।

तदा भूस्वामिना उक्तं सम्यक् अवगत्य रुद्रः उक्तवान्– "तस्मिन् दिने भवता त्रयः प्रश्नाः पृष्टाः। 'भवान् किम् इच्छति?' इति भवता पृष्टम्। 'धनम्' इति उक्तवान् अहम्। भवान् द्वितीयं प्रश्नं पृष्टवान्– 'भवान् कदा कदा कार्यं करोति?' इति। अहम् उक्तवान्– 'दिने रात्रौ च' इति। भवान् पुनः पृष्टवान्– 'कियत्कालं भवान् कार्यं करिष्यति?' इति। अहम् उक्तवान्– 'आजीवनम्' इति" इति।

इदानीं रुद्रस्य वास्तविकं स्वरूपं ज्ञातवान् भूस्वामी। सः हसन् उक्तवान्– "भाग्यवशात् उद्योगः प्राप्तः भवता। भाग्यशाली भवान्" इति।



# चन्दमामानुबन्धः—४२



## अस्मद्देशीया पशुपक्षिसम्पत्—

# सिंहः

**प्रा**चीनकालतः अपि 'मृगराजः' इति 'वनराजः' इति च ख्यातिः अस्ति सिंहस्य। पञ्चतन्त्रकथासु इसोपनीतिकथासु च सिंहः वनराजत्वेन बहुधा उल्लिखितः दृश्यते। पूर्वम् अस्माकं राष्ट्रियमृगः सिंहः एव आसीत्। किन्तु एतेषां सङ्ख्यायां ह्रासः यदा अधिकः जातः तदा 'व्याघ्रः' राष्ट्रियः मृगः इति उद्घोषितम्।

सिंहस्य कण्ठं परितः केसराः भवन्ति। अतः सिंहस्य मुखस्य विशेषशोभा। यथा जलधेः तथा सिंहस्य गाम्भीर्यम् अपि सुप्रसिद्धम्। व्याघ्रः इव सिंहः अपि मार्जालकुलीयः एव। किन्तु केसराणां कारणतः एतस्य पृथक् वैशिष्ट्यं दृश्यते। सम्यक् प्रवृद्धः सिंहः आपुच्छाग्रम् आनासिकं ९० सें.मी. दीर्घः भवति प्रायः। २७५ कि.ग्रा. भारः भवति। श्वेतमिश्रितपीतवर्णच्छाया भवति एतस्य शरीरस्य। केसराः तु अरुणकान्त्या शोभन्ते। सिंहः एकाकितया गणे च निवसति। गणे ५-२० सिंहाः भवन्ति प्रायः।

एवं हि श्रूयते – पूर्वं भारते सर्वत्र सिंहाः सुखेन सञ्चरन्ति स्म इति, सैबीरियातः आगताः व्याघ्राः तान् दक्षिणप्रदेशं प्रति प्रेषितवन्तः इति च। गुजरात्‌राज्यस्थे 'गिर् राष्ट्रियोद्याने' इदानीं सिंहाः सञ्चरन्तः दृश्यन्ते। एतस्मिन् केन्द्रे इदानीं प्रायः २३० सिंहाः स्युः।

**नाभिषेको न संस्कारः सिंहस्य क्रियते वने।**
**विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता॥**

# पत्रिकाप्रतिनिधि: बालिका

गते नवेम्बर्मासे केरलराज्यस्य राजधान्यां तिरुवनन्तपुरे अन्ताराष्ट्रियः बालचलनचित्रोत्सवः प्रवृत्तः। तत्र पत्रकाराणां मध्ये दशवर्षीया काचित् बालिका अपि उपविष्टवती आसीत्। जनाः चिन्तितवन्तः यत् विदेशीयेन पत्रकारेण केनचित् सह आगता तदीया कन्या स्यात् एषा इति। किन्तु तस्याः समीपे स्थितं 'परिचयपत्रं' दृष्ट्वा सर्वे आश्चर्यचकिताः अभवन्।

तस्याः नाम इनो हिक्किनेन्। सा फिन्लण्डदूरदर्शनस्य प्रतिनिधिः सती एतस्मिन् चित्रोत्सवे भागं गृहीतवती। चित्रोत्सवे चित्राणि दृष्ट्वा, चलनचित्रक्षेत्रप्रमुखाणां सन्दर्शनं कृत्वा विशेषान् सङ्गृह्य फिन्ल्याण्ड्दूरदर्शनं प्रति प्रेषयितुं आगतस्य दूरदर्शनगणस्य (टि.वी. टीम्) सदस्येषु अन्यतमा एषा।

तिरुवनन्तपुरम् आगता एषा प्रथमं 'कनककुन्नुभवनं' प्रति नीता। तस्मिन् एव भवने चलनचित्रोत्सवः प्रवर्तते स्म। तत्परिसरे स्थितं प्राकृतिकं सौन्दर्यं दृष्ट्वा सा नितरां सन्तुष्टा। अनन्तरं सप्ताहद्वयं यावत् सा महता उत्साहेन चित्रोत्सवे भागम् ऊढवती। बहूनि चलनचित्राणि दृष्टवती च। अस्मद्देशीयानां बालनटानां नटनाकौशलं दृष्ट्वा सा अतीव सन्तोषं प्राप्तवती। उत्सवस्य निर्वाहकैः केरलशैल्या पाकः सज्जीकृतः आसीत्। एषः पाकः एतस्यै नितराम् अरोचत। तत्रापि नेन्त्रफलम् इति प्रसिद्धम् अस्माकं कदलीफलं खादित्वा तु एषा नितरां स्वादुमुग्धा। स्वदेशं प्रति गमनसमये सा कैरलीयं कदलीखाद्यविशेषं नीतवती।

इनो चतुर्थकक्ष्यायां पठति। चित्रोत्सवे एषा चित्राणि पश्यन्ती, समये प्राप्ते विविधदेशेभ्यः समागतैः बालैः सह वार्तालापं कुर्वती क्रीडाम् अपि भागं गृह्णती सन्तोषेण आसीत्।

"एषः केवलं चित्रोत्सवः न, अपि तु महासन्तोषजनकः नेत्रोत्सवः" इति उक्तवती इनो। यतः फिन्ल्याण्ड्देशे बालचलनचित्रनिर्माणम् अधिकतया न प्रचलति। इतः पूर्वं तया दूरदर्शने चित्रमन्दिरेषु च यावन्ति चित्राणि दृष्टानि ततः द्विगुणितानि चित्राणि दृष्टानि सप्ताहाभ्यन्तरे। तत्र बहूनि चित्राणि तस्यै नितराम् अरोचन्त। तत्रापि मलयाळचित्रम् 'अभयं' मह्यं विशेषतः अरोचत इति उक्तवती सा।

'सर्वदा पठतु इति पुत्रं तर्जयन्ती भवति माता। तदा दशवर्षीयः सः बालः पितामहं शरणं गत्वा अभयं प्राप्नोति' इत्येषः तस्य चित्रस्य कथासारः।

विद्याभ्यासे निपुणा इनो पियानोवाद्यस्य वादने अपि नैपुण्यं प्राप्तवती अस्ति। चित्रलेखने अपि एतस्याः विशेषाभिरुचिः। टेन्निस् क्रीडा एतस्याः प्रिया क्रीडा। स्टेफी ग्राफ् एतस्याः प्रियां क्रीडापटुः।

यद्यपि इनो अल्पवयस्का बाला तथापि सम्भाषणे, विमर्शे च सा ज्येष्ठान् अतिशेते। एषा भाविनि काले इनोऽप्यतिशयितां कीर्तिं प्राप्नोतु इति आशास्महे वयम्।



# भवन्तः जानन्ति वा?

१. वराहजातीयः महान् प्राणी कः?
२. "जिप्सी"जनानां का भाषा?
३. स च देशः कः, यं च परितः नगरम् अस्ति?
४. "फौण्टन् पेन्" संशोधकः कः?
५. अट्लाण्टिक्मार्गेण एकाकितया प्रयाणं कृतवती विमानचालिका का?
६. सर्वाः अपि संख्याः रोमन्पद्धत्या लेखितुं शक्याः, ऋते एकस्याः। एवं तर्हि सा संख्या का स्यात्?
७. रक्तवर्णीयः ग्रहः कः?
८. इदानीं प्रपञ्चे पत्रपेटिकां रक्तवर्णेन लिम्पन्ति। पूर्वं कः वर्णः उपयुज्यते स्म अत्र?
९. कुञ्चीयनप्रक्रियया युक्तानां पाञ्चालिकानाम् उपयोगः कुत्र आरब्धः?
१०. बाटिक्पद्धत्या चित्रलेखनम् ऐदम्प्राथम्येन कस्मिन् देशे आरब्धम्?
११. कर्कटकाः कथं सञ्चरन्ति?
१२. 'सर् रोजर् बानिष्टर्' कस्मिन् विषये प्रसिद्धः?
१३. श्वेतगजानां जन्मस्थानं किम्?
१४. डा॥ क्रिस्टियन् बर्नार्ड् १९६७ वर्षे एकां नूतनशस्त्रचिकित्सां कृतवान्। सा शस्त्रचिकित्सा का?
१५. अन्तरिक्षं गतः (१९९० वर्षे) प्रथमः पत्रकारः कः?

## उत्तराणि

१. जलगजः।
२. रोमनी।
३. पेटकन्, रोम्।
४. लूयिस् वाटर्मन्।
५. अमीलिया एर्हार्ड्। १९२८ वर्षे।
६. शून्यम्।
७. अङ्गारकः।
८. हरितवर्णः।
९. भारते ईजिप्ट्देशे च।
१०. इण्डोनेशियादेशे।
११. तिर्यक्गत्या।
१२. ऐदम्प्राथम्येन चतुर्षु निमेषेषु मैलदूरं धावितवान् इत्यतः।
१३. सियाम्। (इदानीन्तनं थायल्याण्ड्।)
१४. हृदयपरिवर्तनम्।
१५. जपानीयः टोयो हिरो अकियामा।



# नटपटुः नटेशः

भरतपुरे पूर्वं नटेशः नाम कश्चित् आसीत्। तस्य निश्चितः उद्योगः कोऽपि न आसीत्। सदा नस्यचूर्णं सेवते स्म सः। मुखनासिकाभ्यां तस्य सम्भाषणम्। पादम् उन्नीय स्थापयन् नृत्यगत्या चलति स्म सः। एतत्सर्वं दृष्ट्वा जनाः तं वदन्ति स्म यत् एषः 'नटपटुः नटेशः' इति।

नटेशस्य निश्चितः उद्योगः कोऽपि नास्ति इत्यतः आयः अपि कोऽपि नास्ति। किन्तु भोजनविषये वृकोदरः सः। परान्नभोजनेन एव तस्य जीवननिर्वहणम्।

भोजनार्थम् उपविष्टः सः वदति स्म– "आहारे त्यक्तलज्जः सुखी भवति इति अभिज्ञाः वदन्ति। किन्तु अहं तु चिन्तयामि– लज्जात्यागः अशिष्टव्यवहारः इति। तादृशः व्यवहारः मह्यं सर्वथा न रोचते। यत्र अनादरः तत्र भोजनं न करोमि एव। मम एतं व्यवहारं जानन्तः जनाः आदरेण प्रीत्या च भक्ष्याणि अधिकतया एव परिवेषयन्ति। परिविष्टं क्षेप्तुं न इच्छामि अहम्। अतः अनिच्छन् अपि खादामि। परिवेषणकर्तॄन् खेदयितुं न शक्यते खलु?" इति एवं वदन् सः द्विगुणितं भोजनं कृत्वा गच्छति स्म।

गच्छता कालेन नटेशस्य व्यवहारः सर्वैः अपि ज्ञातः एव। अतः कोऽपि तं भोजनार्थं न आह्वयति स्म। अतः नटेशः अन्यप्रदेशतः स्थानान्तरणं प्राप्य आगतान् उद्योगिनः अधिकारिणः च आश्रित्य भोजनं प्राप्नोति स्म।

कदाचित् सर्वकारीये उद्योगे स्थितः साम्बशास्त्री आम्रपत्राणि कदलीपत्राणि च गृहीत्वा गच्छन् नटेशेन दृष्टः। नटेशः झटिति तस्य समीपं गत्वा तस्य नामकुलादिकम् उद्योगं च ज्ञात्वा तस्मिन् दिने तस्य गृहे



गृहं न गतवान् एव। यतः तावता एव तेन वार्ता श्रुता यत् ग्रामपुरोहितः सपरिवारं तिरुपतियात्रार्थं गच्छति इति। अतः एषः झटिति पुरोहितगृहं गत्वा– "अहो दाक्षिण्यं भवतः! प्रयाणे भवतः साहाय्यम् आवश्यकम् एव खलु? तदर्थम् अहम् अस्मि। मम कार्याणि नश्यन्ति इति चिन्तनं मास्तु भवतः। तानि आगत्य करिष्यामि" इति उक्त्वा तस्मिन् दिने तेन सह प्रस्थितवान् एव। एवं सप्ताहस्य भोजनं सम्पादितं तेन।

साम्बशास्त्री तु मध्याह्ने नटेशस्य प्रतीक्षां कृतवान्। नटेशस्य अनागमनेन सः खिन्नः अभवत्।

ततः सप्ताहस्य अनन्तरं कदाचित् प्रातःकाले मार्गे नटेशं दृष्टवान् साम्बशास्त्री।

'इदानीं साम्बशास्त्री कोपेन कटुवचनानि वदिष्यति' इति जानन् नटेशः एव कृतकहासं प्रदर्शयन्– "नमस्कारः श्रीमन्! मम विषये कोपः स्यात् भवतः। तस्मिन् दिने एवं जातम्– भवतः गृहस्य भोजनम् अङ्गीकृत्य इतः गतः खलु? अग्रे मार्गे ग्रामपुरोहितः मिलितः। 'तिरुपतियात्रार्थं प्रस्थितवान् अस्मि। भवतः साहाय्यम् अत्यावश्यकम्' इति सानुरोधम् उक्त्वा मां नीतवान् सः। ग्रामपुरोहितस्य वचनं तिरस्कारयोग्यं न खलु? अतः एवं जातम्। अद्य भोजनार्थं भवतः गृहम् एव आगमिष्यामि " इति वदन् साम्बशास्त्रिणः हस्तं गृहीत्वा तदीयं गृहं प्रति

वटसावित्रीव्रतपूजा अस्ति इत्यपि ज्ञातवान्। "व्रतपूजा अस्ति वा गृहे? एतादृशे दिने बन्धुमित्राणि गृहं प्रति आह्वातव्यानि। नूतनतया एतं ग्रामम् आगतवतः भवतः बान्धवाः मित्राणि वा कथं स्युः? अतः अहं भवद्गृहम् आगमिष्यामि। मित्राय भोजनं दत्तं चेदेव व्रतस्य फलं प्राप्यते खलु?" इति उक्त्वा नस्यचूर्णं नासिकायां योजयित्वा उच्चैः क्षुतवान्।

साम्बशास्त्रिणः महान् सन्तोषः जातः। गृहस्य अभिज्ञानम् उक्त्वा "अविलम्बेन आगच्छतु" इति सूचयित्वा ततः गतवान् साम्बशास्त्री।

किन्तु तस्मिन् दिने नटेशः साम्बशास्त्रिणः

प्रस्थितवान् नटेशः।

साम्बशास्त्रिणः मातुलानी लक्ष्मीदेवी। सा अन्यद्वारा कार्यकारणे नितरां दक्षा। नटपटोः नटेशस्य व्यवहारादिकं तया सम्यक् ज्ञातम् आसीत्।

गृहम् आगतः नटेशः नस्यचूर्णं नासिकायां योजयित्वा यदा क्षुतवान् तदा एव लक्ष्मीदेवी ज्ञातवती यत् एषः नटेशः अद्य अत्र भोजनार्थं स्थास्यति इति। सा दर्पेण उक्तवती– "नटेशवर्य! समये उपस्थितः भवान्! भोजनार्थं भवान् अत्र आगतः। किन्तु पाकः इतोऽपि न सिद्धः। पाकशालायां जलसङ्ग्रहः समाप्तः अस्ति। अतः भवान् झटिति स्नात्वा कूपतः सप्ताष्टघटमितं जलम् आनयतु। तदनन्तरं भोजनम्" इति।

यदि जलानयनं निराक्रियेत तर्हि भोजनं न प्राप्येत। अतः अनन्यगतिकः नटेशः अतिगभीरात् कूपतः महता कष्टेन जलम् आनीय स्थापितवान्। 'अद्य दौर्भाग्यं मम! अजानन् कष्टे पतितः अस्मि' इति खेदम् अनुभूतवान् सः।

यदा घटत्रयमितं जलम् आनीतं तदा एव नितरां श्रान्तः सः दीर्घं निःश्वसन् विश्रान्त्यर्थं गृहस्य पुरतः उपविष्टवान्। तदा तत्र आगता लक्ष्मीदेवी– "अये! परान्नभोजनेन शरीरं वर्धितवतः भवतः सामर्थ्यम् एतावत् एव? भोजनानुगुणं किमपि साहाय्यं कृतं चेत् भवतः अपि हितम्, अस्माकम् अपि सन्तोषः। साहाय्यं किमपि अकृत्वा भोजनं कृत्वा गमनं पापाय। अस्तु, भोजनं कृत्वा विश्रान्तिं प्राप्य



अनन्तरं पुनः जलम् आनयतु। इदानीं भोजनार्थम् आगच्छतु" इति उक्तवती।

प्रतिवचनं किमपि अवदन् भोजनार्थम् उपविष्टवान् नटेशः। महती बुभुक्षा इत्यतः बृहत् कवलं कृत्वा वेगेन भोजनं कर्तुम् उद्युक्तः सः। तदा लक्ष्मीदेवी पुनः उक्तवती– "अये! मन्दं खादतु। सम्यक् चर्वणं कृत्वा यावदावश्यकं तावदेव खादनीयम्। अन्यगृहे भोजनं प्राप्तम् इति द्विगुणितं खादितं चेत् कः लाभः? स्थूलत्वं प्राप्यते तदा। मानवः परिश्रमेण स्वस्य आहारं स्वयं सम्पादयेत्। तदा एव गौरवम्। सर्वदा पराज्ञे एव प्रवृत्तिः चेत् काकम् इव भवन्तम् अपि निवारयिष्यन्ति जनाः। एतादृशं जीवनं नरकप्राप्तेः हेतुः" इति।

अद्यावधि कोऽपि नटेशम् एवं न बोधितवान् आसीत्। अतः परान्नसेवनं पापाय इति भावना एव न आगता आसीत् तस्य मनसि। लक्ष्मीदेव्याः वचनानि स्मरन् लज्जया शिरः अवनमय्य मौनं भोजनं समापितवान् सः। भोजनं समाप्य हस्तक्षालनार्थं यदा सः गतः तदा लक्ष्मीदेवी पुनः उक्तवती– "अये, भोजनं समाप्य तथैव निर्गन्तुम् उद्युक्तः खलु भवान्? पत्रं बहिः स्वयं क्षिप्त्वा गोमयेन उपलेपनं करणीयं भवता एव। परान्नं केवलं खादतः, कार्यं किमपि अकुर्वतः भवतः भोजनपत्रम् अहं स्पृशामि चेत् अहं पापभाक् भवेयम्" इति।

हितवचनश्रवणेन लज्जितः नटेशः एतानि तिरस्कारपूर्णानि वचनानि श्रुत्वा नितरां खिन्नः अभवत्। लक्ष्मीदेव्याः वचनानुगुणं सर्वं कृत्वा मौनं ततः निर्गतवान् नटेशः। सायं पुनः तद्गृहं न आगतवान् सः।

पूर्वं यः नयवचनैः भोजनं प्राप्नोति स्म सः नटेशः इदानीं अन्यगृहं गत्वा 'मया किं कार्यं करणीयम्' इति पृष्ट्वा कार्यं कृत्वा भोजनं करोति। कार्यम् अकृत्वा कुत्रापि भोजनं न करोति सः। एतेन जनाः तस्मिन् आदरवन्तः अभवन्। 'परोपकारी नटेशः' इति कीर्तिः अपि प्राप्ता तेन।





# दानशीलस्य स्वप्नः

पूर्वं महाराजः वीरवर्मा अवन्तीदेशं पालयन् आसीत्। तस्य आप्तसाहाय्यकस्थाने योग्यः कश्चन मन्त्री आवश्यकः आसीत्। महाराजस्य पूर्वतनः आप्तसाहाय्यकः जयानन्दः। वृद्धः सः जयानन्दः अस्वस्थः इति कारणतः तत् आप्तसाहाय्यकस्थानं रिक्तम् आसीत्।

जयानन्दः बुद्धिमान् आसीत्। उत्तमरीत्या कार्यनिर्वहणं करोति स्म सः। दूरदृष्टिः अपि तस्मिन् विशेषतः आसीत्। अतः तादृशः एव, नियोजनीयः इति महाराजस्य इच्छा। किन्तु तादृशस्य अन्वेषणं कथम् इति न जानाति सः।

एकस्मिन् दिने राजा प्रधानमन्त्रिणं सुबुद्धिम् आहूय एतं विषयम् उपस्थापितवान्।

एतत् श्रुत्वा सुबुद्धिः महाराजम् उक्तवान्– "महाराज! देशे ये राजनीतिशास्त्रं, अर्थशास्त्रं, न्यायशास्त्रं च अभ्यस्तवन्तः तान् आह्वयाम। शास्त्रविषये तेषां परीक्षां करवाम। तेषु यः प्रतिभावान् भवति तस्य चयनं करवाम। अनन्तरम् अस्वस्थस्य जयानन्दस्य अभिप्रायानुसारं कञ्चित् आप्तमन्त्रिस्थाने नियोजयाम चेत् उत्तमं भवति" इति।

एषः एव उत्तमः उपायः इति राजा चिन्तितवान्। मन्त्री सुबुद्धिः शीघ्रातिशीघ्रम् एतस्मिन् विषये आवश्यकाः योग्यताः सूचनाः च लेखयित्वा सडिण्डिमघोषं देशे सर्वत्र प्रचारं कृतवान्।

एतां वार्तां श्रुत्वा देशस्य सर्वदिग्भ्यः अपि विद्यावन्तः अनेके युवकाः आगतवन्तः। शास्त्रविषये तेषां परीक्षा कृता। परीक्षायां जयः विजयः च उत्तीर्णौ। तौ द्वौ अपि समानौ।



अतः सुबुद्धिः तौ जयानन्दसमीपं नीत्वा प्रवृत्तं सर्वम् उक्तवान्।

तत् श्रुत्वा जयानन्दः– "महाराजस्य आप्तमन्त्री यः भवति सः शास्त्रेषु पारङ्गतः भवति चेत् न पर्याप्तम्। क्लिष्टाः समस्याः अपि उपायेन परिहर्तुं समर्थः भवेत् सः। शास्त्रेषु पारङ्गतयोः एतयोः द्वयोर्मध्ये आप्तमन्त्रिस्थाने स्थातुं कः योग्यः इति अनया अन्तिमपरीक्षया ज्ञायते" इति उक्त्वा कथं परीक्षा करणीया इति सुबुद्धिं विस्तरेण बोधितवान्।

जयानन्दस्य सूचनानुसारं सुबुद्धिः जयं विजयं च आहूय किञ्चित्कालं वार्तालापं कर्तुम् आरब्धवान्। वार्तालापमध्ये यदा मैत्रीविषयः आगतः तदा सुबुद्धिः वेदनायुक्तस्वरेण उक्तवान्– "सद्यः एव मम स्नेहितः कश्चित् विषादस्य परिणामतः मृतः अभवत्। तं विषयं भवतोः समीपे वदामि। भवद्भ्यामपि तत् श्रोतव्यमेव" इति। युवकौ तु श्रद्धया शृण्वन्तौ आस्ताम्।

सुबुद्धिः स्वस्नेहितस्य विषये एवम् उक्तवान्– "मम स्नेहितस्य नाम दानशीलः इति। वयसा वृद्धस्य तस्य हृदयवेदना अपि आसीत्। एकस्यां रात्रौ निद्रायां दानशीलः भयङ्करं स्वप्नं दृष्टवान्। स्वप्ने सः कस्मिंश्चित् अरण्ये गच्छन् मार्गभ्रष्टः जातः। सर्वत्र वृक्षाः सस्यानि गुल्माः च। तन्मध्ये मार्गं ज्ञातुम् अशक्तः दानशीलः मध्ये मध्ये स्खलन् कथमपि किञ्चित् अग्रे गत्वा एकं विशालप्रदेशं प्राप्तवान्। आकाशे नक्षत्राणि विद्योतन्ते स्म। तस्मिन् मन्दप्रकाशे दानशीलः एकं चतुष्पथं दृष्टवान्। एकेन मार्गेण अग्रे गतवान्। ततोऽपि अग्रे सस्यानि गुल्माश्च बहवः आसन्। अतः मार्गः एव न दृश्यते स्म। तत्र केचन सिंहाः अटन्ति स्म। एकः सिंहः दानशीलं दृष्ट्वा भयङ्करं गर्जन् तस्य समीपमेव आगन्तुम् उद्युक्तः।

दानशीलः भयात् शिलाकण्टकानि अपि अविगणय्य यथा आगतवान् तथैव धावित्वा चतुष्पथं प्राप्तवान्। तत्र कुत्रापि सिंहस्य चिह्नमपि न दृष्टम्। किञ्चित् श्रमपरिहारं कुर्वन् द्वितीयमार्गम् आश्रित्य गन्तुम्

आरब्धवान् दानशीलः। अनतिदूरे एव कश्चन प्रकाशः एतस्य दिशि एव आगच्छन् आसीत्। दानशीलः एकस्य गुल्मस्य पृष्ठतः स्थित्वा प्रकाशं दृष्टवान्। सः प्रदेशः पूर्णतया वल्मीकमयः आसीत्। तेषाम् उपरि कालसर्पाः उपविश्य फणाः चालयन्तः आसन्। फणासु विद्यमानानां मणीनाम् एव प्रकाशः तत्र आसीत्। आगतः प्रकाशः अपि कस्यचन सर्पस्य मणितः एव।

आश्चर्येण पश्यन्तं दानशीलं वल्मीकेषु विद्यमानः कश्चन नागराजसदृशः सर्पः दृष्टवान् एव। सः झटिति फूत्कुर्वन् दानशीलस्य समीपमेव आगतवान्। भीतः दानशीलः वेगेन धावन् पुनरपि चतुष्पथमेव गत्वा स्थितवान्।

अनन्तरं दानशीलः तृतीयं मार्गम् आश्रित्य गतवान्। एवं गच्छन् एकं पर्वतं प्राप्तवान् सः। ततः अग्रे गन्तुं मार्गः न दृश्यते स्म। तत्र सर्वत्र मानवानां कपालानि आस्थीनि च आसन्। ततः प्रतिगन्तुं प्रवृत्तः दानशीलः। तावति काले भयङ्कराकारः राक्षसः विकृतं स्वरं कुर्वन् आगतवान् एव। दानशीलः पुनरपि आक्रन्दनं कुर्वन् धावित्वा चतुष्पथं प्राप्तवान्।

किन्तु राक्षसः अपि हूँकुर्वन् दानशीलम् अनुसृत्य एव आगतवान्। एतत् दृष्ट्वा भीतः दानशीलः चतुर्थ मार्गमाश्रित्य धावितुम् उद्युक्तः। एवं धावन् सः एकं पर्वतम् आरुह्य शिखरपर्यन्तं गतवान्। इतोऽपि अग्रे गन्तुं मार्गः न आसीत्। अपि तु गभीरः कन्दरः



आसीत्। पृष्ठतः राक्षसः आगच्छन् अस्ति। भीत्या कम्पमानः दानशीलः गभीरं कन्दरं पश्यन् आसीत्। तदा कम्पनकारणतः पादस्य अधः विद्यमाना शिला स्खलिता अभवत्। दानशीलः उच्चैः आक्रन्दनं कुर्वन् कन्दरे पतितः'' इति।

सुबुद्धिः एवं उक्त्वा जयविजयौ पश्यन् पुनः उक्तवान्– ''कीदृशः भयङ्करः स्वप्नः! हृदयवेदनापीडितः मम स्नेहितः स्वप्नतः जागरणं प्राप्य अनुक्षणं हृदयस्तम्भनेन मृतः अभवत्'' इति।

तदा जयः महता दुःखेन उक्तवान्– ''स्वप्ने यत् दृश्यते तस्य शरीरस्य च सम्बन्धः अस्ति इति मनश्शशास्त्रतः ज्ञातवान् अस्मि। दानशीलस्य चतुर्वारं प्राणभीतिः जाता। प्रथममेव हृदयवेदनया पीड्यमानः आसीत् सः। अनन्तरं तादृशं घोरं स्वप्नं दृष्टवतः तस्य हृदयक्रिया स्थगिता जाता। सः मृतः। तदर्थम् मम अतीव दुःखं भवति'' इति।

सुबुद्धिः शिरः चालयन् विजयं दृष्टवान्। विजयः मन्दहासपूर्वकम् उक्तवान्– ''क्षम्यताम्, मन्त्रिवर्य, भवता उक्तं सर्वं कल्पितम् एव'' इति।

मन्त्री कोपेन– ''कथं कल्पिता कथा इति वदति भवान्? प्रमाणं किमपि अस्ति वा?'' इति पृष्टवान्।

तदा विजयः सविनयम् उक्तवान्– ''भवतः स्नेहितस्य दानशीलस्य स्वप्नतः यदा जागरणम् जातं तदा एव सः यदि मृतः स्यात् तर्हि तस्य स्वप्नस्य विचारं भवान् कथं ज्ञातवान् स्यात्? ज्ञातुम् अवकाशः एव नास्ति किल! '' इति।

विजयस्य युक्तियुक्तं चिन्तनं दृष्टवतः सुबुद्धेः महान् सन्तोषः जातः। सः विजयम् अभिनन्द्य तस्मिन् एव दिने तं महाराजस्य आप्तसाहाय्यकत्वेन नियुक्तवान्। योग्यस्य साहाय्यकस्य प्राप्त्या राजा नितरां सन्तुष्टः अभवत्। योग्यस्य उपायनस्य दानेन सुबुद्धिं सत्कृतवान् सः।





# वीरः हनूमान्

रामस्य आदेशस्य अनुगुणं तत्तत्स्थले वानरप्रमुखाः स्थितवन्तः। चतुर्षु अपि लङ्काद्वारेषु वानरसेना सज्जीभूय स्थिता अस्ति। आकाशे अपि वानराः केचन सञ्चरन्तः राक्षसानां व्यवहारं परिशीलयन्तः सन्ति। अतः मायायुद्धं कर्तुं न शक्नुवन्ति राक्षसाः। अन्यच्च इतस्ततः परिशील्य मायायुद्धोद्यतान् राक्षसान् सुलभतया अभिज्ञाय बध्नन्ति स्म विभीषणानुचराः।

समये अपेक्षितं साहाय्यं मार्गदर्शनं च दातुं सुग्रीवः पश्चिमोत्तरद्वारयोः मध्ये सञ्चरति स्म।

लङ्कानगरं परितः वानरसेनामात्रं दृश्यते स्म। पिपिलिकाभिः आवृता स्थली इव दृश्यते स्म वानरैः आवृतः त्रिकूटपर्वतः। सर्वत्र वानराः एव। त्रिकूटपर्वते भूमिभागः कुत्रापि न दृश्यते स्म। वानराणां वीरगर्जनं तु हृदयभेद्यम् आसीत्।

रामः विभीषणेन सह समालोच्य निश्चितवान् यत् राजदूतरूपेण अङ्गदः रावणसमीपं प्रेषणीयः इति।

अतः सः अङ्गदं स्वसमीपम् आहूय उक्तवान्– ''वत्स! अङ्गद! दूतरूपेण लङ्कां गत्वा मद्वचनैः भवता रावणः एवं वक्तव्यः– ''रावण! ब्रह्मणः वरं प्राप्य भवान् गर्वेण बहूनि पापानि कृतवान्। भवतः गर्वभङ्गस्य कालः इदानीं सन्निहितः अस्ति। मम पत्नीम् अपहृत्य नीतवतः भवतः अन्तकः अहम् एव अस्मि। यस्मिन् बले विश्वस्य

२२. वानर-राक्षसयुद्धारम्भः।



भवान् सीतां अपहृतवान् तच्च बलं प्रदर्शयतु इदानीम्। अन्यथा सीतां मह्यं समर्पयतु। मां शरणं गच्छति चेत् प्राणाः रक्षिताः स्युः। अन्यथा तीक्ष्णाः मम बाणाः लोकं राक्षसरहितं करिष्यन्ति। धर्ममार्गानुयायी विभीषणः मां शरणं गतः अस्ति। अतः तम् अहं लङ्काराजं करिष्यामि। मायाबलं मम अस्ति इति निश्चिन्तः स्यात् भवान्। किन्तु मया सह युद्धे तत् मायाबलम् अकिञ्चित्करम्। तदपि बलं छित्वा मम बाणाः संहरिष्यन्ति भवन्तम्। युद्धारम्भानन्तरं लङ्कादर्शनं पुनः न शक्यते एव। पत्नीपुत्रबान्धवादिभिः सह वार्तालापः अपि न शक्यते। अतः इदानीम् एव तादृशैः सह वार्तालापं कृत्वा लङ्काम् अपि आतृप्ति पश्यतु। भवतः प्राणानां हरणं रक्षणं वा मदधीनम् अस्ति'' इति।

तारासुतः अङ्गदः रामस्य सन्देशं स्वीकृत्य आकाशमार्गेण वेगेन गच्छन् रावणस्य प्रासादं प्राप्तवान्। मन्त्रिभिः सह उपविष्टं रावणं दृष्टवान्।

''जयतु श्रीरामप्रभुः'' इति उच्चैः उद्घुष्य तत्रत्यानां प्रश्नतः पूर्वम् एव आत्मनः परिचयम् उक्त्वा श्रीरामस्य सन्देशं यथावत् श्रावितवान् अङ्गदः।

परुषम् एतं रामसन्देशं श्रुतवतः रावणस्य कोपः नितरां प्रवृद्धः। तस्य नेत्रे रक्ते जाते, मुखं च उग्रं जातम्।

किं करणीयम् इति अजानन् सः हस्तं हस्तेन मर्दयन् क्रोधेन– ''एतं दुष्टं दुर्विनीतं गृहीत्वा मारयन्तु'' इति उच्चस्वरेण आज्ञां कृतवान्।

एतावत्पर्यन्तं मौनं स्थिताः भटाः झटिति अग्रे आगत्य अङ्गदं गृहीतवन्तः। अङ्गदः प्रतिरोधं किमपि अप्रदर्शयन् क्षणकालं तूष्णीं स्थितवान्। यदा राक्षसभटैः दृढं गृहीतं तदा तान् कक्षेण गृहीत्वा आकाशं प्रति उत्प्लुतवान्।

द्वारमार्गेण बहिः गत्वा अङ्गदः प्रासादशिखरं प्राप्य रावणे पश्यति सति, तान् भटान् अधः पातितवान्। ततः विजयगर्वेण हुङ्कृत्य रामसमीपं गतवान्।

अङ्गदस्य कृत्यं दृष्टवतः रावणस्य हृदये

भीतितरङ्गाः। तस्य धैर्यं किञ्चिदिव च्युतम्। अतुलपराक्रमी वाली तेन स्मृतः। 'वालिनः पुत्रः एषः अङ्गदः पराक्रमेण वालिसमः एव' इति चिन्तयन् रावणः दीर्घं निःश्वसितवान्।

वानराः तु उत्साहेन युद्धारम्भं निरीक्षमाणाः आसन्। सुग्रीवस्य आज्ञायाः अनुगुणं सुषेणः कैश्चित् वानरवीरैः सह चतुर्णाम् अपि लङ्काद्वाराणां परिक्रमणं कुर्वन् आसीत्। नगरस्य अन्तः राक्षसाः विविधानि आयुधानि धृत्वा अटन्तः कोलाहलं कुर्वन्तः आसन्। वार्तावाहकाः राक्षसाः वानराणां चलनादिकं परिशीलयन्तः काले काले रावणं निवेदयन्ति स्म।

रावणः प्रासादस्य शिखरभागं प्राप्य लङ्कानगरीं परितः स्थितां वानरसेनां दृष्ट्वा चिन्तां प्राप्तवान्।

वानरसेनाकारणतः त्रिकूटपर्वतः एव जीवं प्राप्तवान् इव दृश्यते स्म। 'एतावतां वानराणां संहारः न सुकरः' इति भावना आगता रावणस्य मनसि।

रामः अपि लङ्काप्राकारस्य समीपं गत्वा राक्षसैः क्रियमाणं रक्षणकार्यं युद्धसन्नाहं च सम्यक् परिशीलितवान्। 'एतस्याम् एव लङ्कायां मम प्रिया सीता बद्धा अस्ति' इति स्मरतः श्रीरामस्य दुःखं कोपः च उद्गतः। सः धनुष्टेङ्कारं कृत्वा आज्ञां कृतवान्– ''शत्रुसंहारस्य आरम्भः भवतु'' इति।



रामधनुषः टेङ्कारः लङ्कायां सर्वत्र प्रसृतः। अश्रुतपूर्वं ध्वनिं श्रुत्वा लङ्कास्थाः राक्षसाः दिग्भ्रान्ताः। क्षणकालस्य अनन्तरं ते रामधनुष्टेङ्कारम् अभिज्ञाय युद्धारम्भं ज्ञातवन्तः।

रामाज्ञां श्रुत्वा महावृक्षान् महाशिलाः च उन्नीय वानराः लङ्काप्राकारम् आरोढुम् उद्युक्ताः अभवन्। अल्पे एव काले समग्रा परिखा तैः शिलाभिः वृक्षप्रकाण्डादिभिः च पूरिता। वानराः प्राकारम् आरुह्य द्वारसमीपं गतवन्तः।

विभीषणः कवचं धृत्वा मन्त्रिभिः सह रामसमीपे एव स्थितवान् आसीत्। गजः, गवयः, गवाक्षः, शरभः, गन्धमादनः च सर्वत्र



अटन्तः सेनाव्यवस्थां सम्यक् परिशीलयन्तः आसन्।

शत्रूणाम् आक्रमणं ज्ञात्वा रावणः अपि युद्धारम्भार्थम् आज्ञां कृतवान्।

एताम् आज्ञां श्रुत्वा राक्षसाः उच्चैः गर्जनं कृतवन्तः। रणभेरयः ध्वनिताः। शङ्खनादः उद्गतः। काहलादीनां ध्वनिः सर्वत्र व्याप्तः। रणवाद्यध्वनिश्रवणात् सर्वेषाम् अपि राक्षसानाम् उत्साहः प्रवृद्धः।

अल्पे एव काले युद्धं घोररूपं प्राप्नोत्। राक्षसाः गदाभिः, शक्त्यायुधैः, शूलैः, परशुभिः च वानरान् प्रहरन्ति स्म। वानराश्च वृक्षान्, शिलाः, स्तम्भादीन् च स्वीकृत्य युद्धं कुर्वन्ति स्म। वानराणां नखाः दन्ताश्चापि आयुधानि आसन्।

वानराणाम् आक्रमणतः रक्षागोपुराणि पतितानि। तदा तत्रत्याः राक्षसाः क्रोधं प्राप्य वानरान् निर्दयं प्रहृतवन्तः।

दुर्गात् निर्गताः राक्षसाः वानरैः प्रहृताः नोदिताः च सन्तः भित्त्याहतानि कन्दुकानि इव पुनरपि दुर्गे पतन्ति स्म। वानराः पुनरपि तेषाम् उपरि बलात् पतन्तः तेषाम् आयुधानि आकृष्य तैः एव तान् प्रहरन्ति स्म।

एवं घोरं युद्धं प्रवर्तते स्म। मध्ये केषाञ्चित् बाहुयुद्धम् अपि प्रचलति स्म। अङ्गदः इन्द्रजिता सह, विभीषणस्य मन्त्रिषु अन्यतमः सम्पातिः प्रजङ्घनामकेन राक्षसेन सह, हनूमान् जम्बुमालिना सह, गजः तपनराक्षसेन सह, नीलः निकुम्भेन सह च युद्धं कृतवन्तः।

स्वसामर्थ्यस्य प्राबल्यं प्रदर्शयितुं राक्षसाः यथा प्रयत्नं कुर्वन्ति स्म तथैव वानराः अपि प्रयत्नं कुर्वन्ति स्म। अतः युद्धं घोरातिघोरं भवति स्म।

बाहुयुद्धरतः अङ्गदः इन्द्रजितः रथं सारथिम् अश्वान् च नाशितवान्। सम्पातिः प्रजङ्घं यमलोकं प्रति प्रेषितवान्। हनूमतः प्रहारं सोढुम् अशक्नुवन् जम्बुमालिः मूर्च्छावस्थां प्राप्तवान्। नलः प्रभञ्जनस्य नेत्रे उत्पाटितवान्। सुग्रीवस्य प्रहारेण प्रघसः प्राणान् त्यक्तवान्।

चत्वारः राक्षसवीराः रामं लक्ष्यीकृत्य

युगपत् बाणप्रयोगं कृतवन्तः। रामः स्वबाणैः तेषां बाणान् छित्त्वा बाणप्रयोक्तृणां शिरांसि अपि छिन्नवान्। मैन्दः मुष्टिप्रहारेण वज्रमुष्टिं मारितवान्। सुषेणः विद्युन्मालिं यमलोकं प्रति प्रेषितवान्।

एवं मल्लयुद्धे बहवः राक्षसवीराः वानरवीरैः हताः अभवन्। वानरेषु तु कोऽपि न मृतः। ये व्रणिताः ते वृद्धवानरवैद्यानां चिकित्सया स्वस्थाः अभवन्।



अत्रान्तरे सूर्यास्तः जातः। अन्धकारः प्रसृतः चेदपि युद्धं तु न स्थगितम्। राक्षसाः अन्धकारे एव युद्धभूमौ सञ्चरन्तः वानरान् गृहीत्वा भक्षयन्ति स्म। राक्षसानाम् एतत् कृत्यं जानन्तः वानराः श्वेतदन्तानां सुवर्णाभरणानां च कारणतः राक्षसान् अभिजानन्तः तेषां मुखनासिकादीनि विदार्य मारितवन्तः। अन्येषां केषाञ्चित् राक्षसानाम् उदराणि अपि विदारितानि।

यदा अङ्गदः रथं सारथिम् अश्वान् च नाशितवान् तदा इन्द्रजित् मायाबलेन अदृश्यतां गतवान्। रामलक्ष्मणयोः समीपं गत्वा नागास्त्रं प्रयुज्य तौ बद्धवान्। "यावत् अहम् अदृश्यः सन् युद्धं करोमि तावत् मां पराजेतुम् इन्द्रोऽपि न शक्नोति। एवं स्थिते अल्पयोः भवतोः का कथा? इदानीम् एव भवतोः प्राणान् अपहरिष्यामि" इति उक्त्वा विजयगर्वेण हसितवान् इन्द्रजित्।

नागास्त्रेण सम्यक् बद्धौ रामलक्ष्मणौ परितः किमपि द्रष्टुं न शक्नुतः। इन्द्रजिता प्रयुक्ताः बाणाः तयोः वक्षःस्थले सम्यक् लग्नाः सन्ति। तयोः शरीरतः रक्तं धाराकारेण प्रवहति। स्वस्य दुरवस्थां जानन्तौ अपि तौ किमपि प्रतिकर्तुं न शक्नुतः।

हनूमत्प्रभृतयः वानरवीराः रामलक्ष्मणौ परितः स्थित्वा अश्रूणि स्रावयन्तः किङ्कर्तव्यतामूढाः सन्तः मौनं स्थितवन्तः सन्ति। केचन वानरवीराः सर्वासु दिक्षु इन्द्रजितः अन्वेषणं कृतवन्तः। किन्तु केनापि सः न दृष्टः। विभीषणः केवलं तम् अन्वेष्टुं शक्तवान्।

अत्रान्तरे राक्षसान् उद्दिश्य कथयतः इन्द्रजितः ध्वनिः श्रुतः– "पश्यन्तु भोः,



रामलक्ष्मणयोः बलपराक्रमादयः मम पुरतः अकिञ्चित्कराः जाताः। तौ मया अस्त्रेण बद्धौ स्तः। इतः परं तौ बन्धविमुक्तौ कर्तुं कोऽपि न शक्नोति। तयोः मरणं तु निश्चितम् एव" इति।

अनन्तरम् इन्द्रजित् अदृश्यः सन् एव वानरान् बाणैः बहुधा पीडितवान्। राक्षसाः इन्द्रजितः प्रशंसां कृतवन्तः। निष्पन्दं पतितौ रामलक्ष्मणौ दृष्ट्वा 'एतौ मृतौ' इति चिन्तयन् इन्द्रजित् सन्तोषेण अट्टहासं कुर्वन् लङ्कां प्रतिगतवान्।

रामलक्ष्मणयोः शरीरं नागास्त्रेण आवृतं दृष्ट्वा, बाणैः आविद्धं दृष्ट्वा सुग्रीवः नितरां भीतः।

अश्रूणि स्रावयन्तं सुग्रीवम् उक्तवान् विभीषणः- "सुग्रीव! अलं रोदनेन। युद्धे एतादृश्यः घटनाः सहजाः। सर्वदा जयः एव सम्भवति इति नास्ति। रामलक्ष्मणौ मूर्च्छां गतौ स्तः। अचिरात् एव तौ सचेतनौ भवतः। भीतिः मास्तु भवतः" इति।

लङ्कां गतः सुग्रीवः साक्षात् पितुः समीपं गत्वा गर्वेण उक्तवान्- "रामलक्ष्मणौ मारितवान् अहम्" इति।

परमसन्तुष्टः रावणः पुत्रं दृढम् आलिङ्गितवान्। रणरङ्गे यद्यत् प्रवृत्तं तत्सर्वं पुत्रमुखात् विस्तरेण श्रुतवान् सः।

सर्वं निवेद्य स्वभवनं गतवान् इन्द्रजित्। अनन्तरं रावणः सीतारक्षणकार्ये निरताः राक्षसीः आहूय- "इन्द्रजित् रामलक्ष्मणौ मारितवान् इति वार्ता श्रूयते। एतां वार्तां सीतां निवेदयन्तु। तां पुष्पकविमानेन नीत्वा मृतौ रामलक्ष्मणौ प्रदर्शयन्तु। ततः प्रत्यागता सीता आत्मानम् अलङ्कृत्य मम समीपम् आगच्छतु" इति उक्तवान्।

राक्षसस्त्रियः पुष्पकविमानं सीतायाः समीपं नीतवत्यः। त्रिजटासहितां सीतां तत्र उपवेश्य रामलक्ष्मणौ प्रदर्शयितुं रणाङ्गणं नीतवत्यः च।

लङ्कानगरे विजयपताका उड्डायिता। 'नगरस्य अलङ्कारं कृत्वा विजयोत्सवः आचरणीयः' इति आज्ञापितवान् रावणः। रामलक्ष्मणौ मृतौ इति वार्ता सर्वत्र सडिण्डिमघोषं प्रसारिता।

पुष्पकविमाने उपविष्टा सीता राक्षसानाम् उत्साहं वानराणां विषादं च दृष्टवती। तस्याः नेत्राभ्याम् अश्रूणि आगतानि। तस्याः अश्रूणि मार्जयित्वा सान्त्वनवचनानि उक्तवती त्रिजटा।

'पूर्वं ज्योतिषिकाः माम् उक्तवन्तः आसन् यत् भवती पुत्रवती भविष्यति इति, भवत्याः वैधव्ययोगः नास्ति इति, भवत्याः पतिः अश्वमेधयागं करिष्यति इति, भवती महतः साम्राज्यस्य पट्टमहिषी भविष्यति इति च। भवत्याः पादे या पद्मरेखा अस्ति सा एतत्सर्वं सूचयति इति उक्तवन्तः आसन् ते। तैः उक्तं मिथ्या जातम्। मूलस्य आलम्बनस्य एव अभावे कुतः पुत्रप्राप्तिः, कुतो वा साम्राज्यलाभः? अथवा ज्योतिषिकैः शास्त्रानुगुणं परिशील्य सम्यक् एव उक्तं स्यात्। मम दौर्भाग्यं तादृशानि फलानि अपाकृत्य एतादृशं दुर्मरणादिकं योजितवत् स्यात्। धिक् माम्। धिक् मम दौर्भाग्यम्' इति विलपनं कृतवती सीता।

तदा त्रिजटा– "आर्ये, अलं विलपनेन। रामलक्ष्मणौ न प्राणैः वियुक्तौ, अपि तु मूर्च्छां गतौ तौ। युद्धे एतादृशं सहजम्। मूर्च्छावस्था तयोः शरीरस्य श्रान्तिम् अपनयति। नवोत्साहं प्राप्य तौ अचिरात् एव उत्थास्यतः। अतः भवती खिन्ना मा भवतु" इति उक्तवती। राक्षस्यः पुष्पकविमानम् अशोकवनं प्रतिनीतवत्यः।

रामः प्रथमं सचेतनः जातः। नागास्त्रेण इतोऽपि विमुक्तः न सः। मूर्च्छावस्थायां स्थितस्य लक्ष्मणस्य दर्शनतः तस्मिन् दुःखतरङ्गाः उद्गताः। 'यदि लक्ष्मणः प्राणैः वियुक्तः भवेत् तर्हि प्राणान् धर्तुं न शक्नोमि अहम्। विभीषणं राक्षसराजं करिष्यामि इति प्रतिज्ञां कृतवान् आसम्। तत् पूरयितुं न शक्नुयाम् अहम्। सुग्रीवेण निराशया किष्किन्धा प्रतिगन्तव्या स्यात्। सर्वम् अनिष्टं सम्भवेत्' इत्येवं चिन्तयन् रामः दुःखोद्विग्नः जातः। रामस्य विषादं पश्यतां सुग्रीवादीनां दुःखं द्विगुणितं प्रवृद्धम्।





# न्यायपालनम्

पूर्वतनकाले कश्चित् यवनराजः आसीत्। सः न्यायेन राज्यपालनं करोति स्म। प्रजाः सर्वाः अपि पुत्रवत् प्रीत्या पश्यति स्म सः। कस्यापि अन्याय्यं न इच्छति स्म सः।

एकस्मिन् दिने कश्चित् हस्ते स्यूतं गृहीत्वा महाराजस्य आस्थानम् आगत्य सभायां कोणे स्थितवान्। तं दृष्ट्वा पृष्टवान् राजा– "अये आगन्तुक! भवन्तं पश्यामः चेत् किमपि वक्तुम् इच्छति इव भाति। कः विषयः? वदतु तावत्" इति।

तदा सः आगन्तुकः उक्तवान्– "प्रभो, अहं कश्चित् वणिक्। केनचित् अधिकारिणा एव अहं वञ्चितः अस्मि" इति।

"भीतिः मास्तु। सधैर्यं वदतु– सः कः अधिकारी इति" इति उक्तवान् राजा।

तदा वणिक् उक्तवान्– "सर्वदा अहं वाणिज्यनिमित्तं प्रयाणं कुर्वन् भवामि। एवमेव कदाचित् प्रयाणसमये न्यासरूपेण द्विसहस्रं सुवर्णनाणकानि मुख्यधर्मगुरोः समीपे दत्तवान् आसम्। प्रत्यागत्य पश्यामि चेत् मया न्यासरूपेण दत्ते स्यूते सुवर्णनाणकानि न आसन्, अपि तु ताम्रनाणकानि आसन्" इति।

तदा राजा पृष्टवान्– "भवान् धर्मगुरोः हस्ततः यदा धनस्यूतं प्रतिस्वीकृतवान्, तदा स्यूतम् उद्घाट्य न दृष्टवान् वा?" इति।

"न। धर्मगुरौ मम सन्देहः न उत्पन्नः। यतः मया स्थापिता मुद्रा यथापूर्वम् आसीत्। अतः अहं उद्घाट्य न दृष्टवान्" इति उक्तवान् वणिक्।

महाराजः किञ्चित्कालं चिन्तयित्वा उक्तवान्– "भवतु, इदानीम् एतं स्यूतम् अत्रैव स्थापयित्वा गच्छतु। अहं यदा आह्वयामि, तदा आगच्छतु। भवता यदि सत्यमेव उक्तं स्यात् तर्हि भवान् निश्चयेन

"अरेबियाजानपदकथा"

न्यायं प्राप्नोति। किन्तु भवता उक्तं यदि असत्यं, तर्हि भवतः दण्डनं निश्चितम्'' इति।

राजसभायाः कार्यक्रमाः समाप्ताः। महाराजः उत्थाय स्वभवनं गतवान्। 'यदि वणिक् सम्यक् मुद्रां स्थापितवान् स्यात्, तर्हि स्यूते कथम् सुवर्णनाणकानां स्थाने ताम्रनाणकानि भवितुं शक्यन्ते?' इति वणिजः व्यवहारस्य विषये एव चिन्तयन् अस्ति राजा।

सुदीर्घचिन्तनस्य अनन्तरं राज्ञः मनसि कश्चन उपायः स्फुरितः। राजा झटिति सभास्थानं गतवान्। सिंहासनस्य उपरि पुरतः च स्थापितं रत्नकम्बलं नखैः छित्वा स्वभवनं गतवान्।

अनन्तरदिने उषसि एव राजा मृगयार्थं प्रासादतः निर्गतवान्। प्रातः स्वच्छतार्थं सभाभवनम् आगतः सेवकः छिन्नं रत्नकम्बलं दृष्ट्वा नितरां भीतः। सः धावन् गत्वा मुख्यव्यवस्थापकम् आनीय सर्वं प्रदर्शितवान्।

तदा सः मुख्यव्यवस्थापकः उक्तवान्— ''न जाने, केन एवं कृतम् इति। अस्तु, तावत्। नगरे मोहम्मदः नाम कश्चन चतुरः सौचिकः अस्ति। तम् अत्र आनयतु। वस्त्रच्छेदः किञ्चिदपि यथा न दृश्येत तथा सीव्यति सः'' इति।

सेवकः मोहम्मदस्य समीपं गत्वा प्रवृत्तं समग्रं निवेद्य— ''वस्त्रच्छेदः सर्वथा यथा न दृश्येत तथा सीव्यतु कृपया। छेदं यदि राजा



जानीयात् तर्हि मम शिरश्छेदं कारयेत्'' इति उक्तवान्।

''भोः, भीतिः मास्तु भवतः। रजतनाणकद्वयं ददातु। रत्नकम्बलं यथापूर्वं यथा दृश्येत, सीवनं कृतम् इति यथा न दृश्येत तथा नैपुण्येन सीवनं करिष्यामि'' इति उक्तवान् सौचिकः मोहम्मदः।

सेवकः राजतनाणकद्वयं सौचिकाय दत्तवान्। अनन्तरं तौ राजप्रासादं गतवन्तौ। सौचिकः सीवनकुशलः आसीत् इत्यतः सः तथा सीवनं कृतवान् यत् परीक्ष्य दृष्टं चेदपि सीवनचिह्नं कुत्रापि न दृश्यते स्म। एतत् दृष्ट्वा सः सेवकः तृप्त्या निःश्वसितवान्।

सूर्यास्तसमये राजा मृगयां समाप्य प्रासादं प्रत्यागतवान्। अश्वात् अवतीर्य सः साक्षात् सभाभवनं प्रविष्टवान्। सिंहासनस्थं रत्नकम्बलं परीक्षितवान् सः। तच्च यथापूर्वं दृश्यते स्म। सः स्वच्छताकर्तारं सेवकम् आहूय पृष्टवान्– ''एतत् कम्बलं तत्र तत्र छिन्नम् आसीत् खलु?'' इति।

सेवकः भीत्या कम्पमानः– ''प्रभो, कम्बलं कुत्रापि छिन्नं न आसीत्'' इति उक्तवान्।

''अये! असत्यं वदति वा भवान्? ह्यः मया एव स्वयं कम्बलं छिन्नम् आसीत्। सत्यं वदतु, एतत् सीवितवान् सौचिकः कः?'' इति कोपेन पृष्टवान् राजा।

सेवकः भीत्या कम्पमानः– ''मोहम्मदः नाम सौचिकः सीवनं कृतवान्'' इति वदन् प्रवृत्तं समग्रं निवेदितवान्।



राजा तत्क्षणे एव भटद्वारा सौचिकं मोहम्मदम् आनायितवान्। वणिजः व्यवहारस्य सम्बन्धिनं स्यूतं प्रदर्शयन् पृष्टवान् सः– "एतं स्यूतम् इतः पूर्वं दृष्टवान् वा भवान्?" इति।

सौचिकः मोहम्मदः स्यूतं सम्यक् परीक्ष्य– "एषः स्यूतः मया इतः पूर्वं दृष्टः एव। प्रधानः धर्मगुरुः समीकरणार्थम् एतं स्यूतं मत्समीपम् आनीतवान् आसीत्। यत्र मुद्रया कीलितं तत्रैव सीवनं कृतं मया" इति उक्तवान्।

राजा सौचिकं प्रेषयित्वा भटद्वारा धर्मगुरुम् आनायितवान्। वणिजा कृतम् आरोपं निवेद्य– "धर्मगुरुः सन् वञ्चनं कुर्वतः भवतः लज्जा न भवति वा? धर्मस्य उपदेशकः एव वञ्चनां कर्तुम् उद्युक्तः भवति चेत् लोकस्य का वा गतिः? एतादृशेन कृत्येन न केवलं भवतः, अपि तु ममापि अवमाननम्। मम धवलां कीर्तिं मलिनीकृतवान् भवान्" इति उक्तवान्।

तदा धर्मगुरुः– "शत्रुपक्षीयः कोऽपि भवन्तं मिथ्यावार्तां निवेदितवान् स्यात्। मया कोऽपि कदापि न वञ्चितः" इति सधैर्यम् उक्तवान्।

"अये धूर्त! वञ्चनां कृत्वा निर्लज्जम् असत्यम् अपि वदति भवान्? सर्वं परिशील्य भवान् वञ्चितवान् इति निर्णीय एव अहं भवन्तम् अत्र आनायितवान्। एतं स्यूतं पश्यतु। एतस्य स्यूतस्य सीवनं कृतवान् सौचिकः मोहम्मदः अत्र साक्षी" इति वदन् धर्मगुरोः पुरतः स्यूतं क्षिप्तवान्।

स्यूतस्य दर्शनात् मोहम्मदस्य नाम्नः श्रवणात् च धर्मगुरोः मुखं विवर्णं जातम्। सः अपराधम् अङ्गीकृत्य क्षमां प्रार्थितवान्।

राजा धर्मगुरोः बन्धनार्थं भटान् आदिष्टवान्। एवं धर्मगुरुः बन्दी जातः।

अनन्तरदिने राजा वणिजम् आनाय्य– "उच्चस्थाने स्थितं महावञ्चकं भवान् सूचितवान् इत्यतः एतत् उपायनं स्वीकरोतु कृपया" इति उक्त्वा त्रिसहस्रं सुवर्णनाणकानि दत्तवान्।





# गेहेशूरः

सङ्गमदुर्गनामके ग्रामे रोहिणी नाम काचित् गृहिणी आसीत्। तस्याः प्रतिवेशिनी सुनीता। सुनीता रोहिण्याः ननान्दा। सुनीता-रोहिण्योः सदा कलहः भवति स्म। उभे अपि रामलिङ्गस्य आत्मीये एव इति कारणतः एकस्याः पक्षः समर्थितः चेत् अपरस्याः कोपः। अतः रामलिङ्गः तयोः कलहं शृण्वन् अपि निवारणार्थं प्रयत्नं न करोति स्म।

सुनीता एकं मार्जारं पालितवती आसीत्। कदाचित् स च मार्जारः रोहिण्याः गृहं प्रविश्य समग्रं क्षीरं पीत्वा अधावत्। रोहिणी मार्जारं ताडयितुं ग्रहीतुं च यद्यपि प्रयत्नं कृतवती, किन्तु सा सफला न जाता। तदा क्रुद्धा सा मार्जारं मार्जारस्वामिनीं सुनीतां च कठोरं निन्दितवती।

"क्षीरस्य पानं मार्जारस्य स्वभावः। एतत् जानद्भिः अस्माभिः क्षीरं सम्यक् स्थापनीयम्। तत्र प्रमादं कृत्वा मार्जारं निन्दामः चेत् किं प्रयोजनम्? मम मार्जारस्य न कोऽपि दोषः।" इति उक्तवती सुनीता।

"एतं दुष्टं मार्जारम् अद्यैव ग्रामात् बहिः त्यक्त्वा आगच्छतु। अन्यथा विषं दत्त्वा मारयिष्यामि अहम्" इति उक्तवती रोहिणी।

"मम मार्जारः ममैव गृहे स्थास्यति। विषादिकं दत्तं चेत् अनन्तरकालीनः परिणामः घोरः स्यात्" इति गाम्भीर्येण उक्तवती सुनीता।

एवं तयोः कलहः प्रवृद्धः। ते परस्परं कठोरं निन्दितवत्यौ। तदा क्षेत्रकार्यार्थं गन्तुम् उद्युक्तः रामलिङ्गः प्रतिवेशिनीं भगिनीम् उक्तवान्– "प्रातः एव कोऽयं कोलाहलः? अलं कलहेन। भगिनि, भवती तूष्णीं तिष्ठतु तावत्" इति।

तदा सुनीता क्रोधेन– 'किमर्थं माम् उपदिशति? प्रथमं पत्नीम् उपदिशतु। पत्नीं



निग्रहीतुम् अशक्तः निर्वीर्यः भवान् माम् उपविशति। हुँ, उत्तरकुमारसदृशः गेहेशूरः भवान्'' इति उक्तवती।

रामलिङ्गः एतत् श्रुत्वा अपि प्रतिवचनं किमपि अवदन् दीर्घं निश्श्वस्य ततः निर्गतवान्।

किन्तु सुनीतायाः वचनैः रोहिणी नितरां क्रुद्धा। ''मम पतिं गेहेशूरः इति उक्तवती वा भवती? कियत् धाष्टर्यं भवत्याः? सर्वं धनादिमदस्य फलम्। भवत्याः औद्धत्यव्यवहारं ग्रामज्येष्ठान् निवेदयिष्यामि। भवती मम पादौ गृहीत्वा क्षमां यथा प्रार्थयेत् तथा करिष्यामि'' इति उक्तवती सा।

''अहो, महाराज्ञ्याः भवत्याः पादौ ग्रहीतव्यौ वा मया? यत् भवेत् तत् भवतु। वस्तुस्थितिः एव उक्ता मया। अतः भवती व्यवहारं ग्रामज्येष्ठानां समीपं नयति चेत् न कोऽपि भीतिः मम'' इति उक्तवती सुनीता।

रोहिणी तत्क्षणे एव ग्रामज्येष्ठस्य समीपं गत्वा सुनीतया उक्तं निवेद्य– 'सा मम पादौ गृहीत्वा क्षमां यथा प्रार्थयेत् तथा करोतु' इति उक्तवती।

रोहिणीं सुनीतां च बहोः कालतः जानाति ग्रामप्रमुखः। अतः सः उक्तवान्– ''एतत् प्रकरणं यदा प्रवर्तते स्म तदा तत्र अन्यः कोऽपि आसीत् वा?'' इति।

''मम अनुजः कनकराजः तत्र आसीत्। मम आवुत्तः देवराजः अपि तत्र आसीत्'' इति उक्तवती रोहिणी।

''तर्हि तौ आनयतु'' इति उक्तवान् ग्रामप्रमुखः। तौ आनेतुं गतवती रोहिणी। सेवकद्वारा सुनीताम् अपि आनायितवान् ग्रामप्रमुखः।

सर्वे यदा उपस्थिताः तदा ग्रामप्रमुखः रोहिण्याः अनुजं कनकराजं पृष्टवान्– ''सुनीता भवतः आवुत्तं गेहेशूरः इति उक्तवती वा? तस्य गेहेशूरत्वं दृष्टं वा भवता?'' इति।

''सुनीतया तथा उक्तम् इति तु सत्यम्। मम आवुत्तः तु दृढकायः। सद्यः प्राकार-भित्तिम् अतिक्रम्य कोऽपि चोरः यदा

गृहसमीपम् आगतः तदा मम आवुत्तः तं स्थूलं चोरं लीलया उन्नीय प्राकारात् बहिः मार्गे क्षिप्तवान्। अन्यच्च मम आवुत्तः ऋणरूपेण दत्तं धनं प्रतिसङ्ग्रहीतुं यदा गच्छति तदा कठोरैः शब्दैः व्यवहृत्य ऋणस्वीकर्तृषु भीतिं जनयति। अतः तस्य दर्शनमात्रेण ऋणं प्रत्यर्पयन्ति ऋणस्वीकर्तारः। एतत्सर्वं गेहेशूरस्य लक्षणं न इति भाति मम'' इति उक्तवान् कनकराजः।

ग्रामप्रमुखः देवराजं पश्यन् पृष्टवान्– ''एतद्विषये भवतः आशयः कः?'' इति।

''यदा रामलिङ्गवर्यः क्षेत्रे भवति तदा यानि दृढवचनानि वदति तेभ्यः भीताः कर्मकराः शिरः अवनमय्य कार्यं कुर्वन्ति। तस्य उपस्थितौ कोऽपि आलस्यं न प्रदर्शयति। एतादृशं गेहेशूरः इति कथं वा वदेम वयम्?'' इति उक्तवान् देवराजः।

एतत्सर्वं श्रुत्वा सुनीताम् उक्तवान् ग्रामप्रमुखः– ''सर्वं श्रुतं खलु भवत्या? एतादृशं समर्थं भवती गेहेशूरः इति कथं उक्तवती?'' इति।

तदा सुनीता आत्मानं समर्थयन्ती उक्तवती– ''एतत्सर्वं पत्न्याः अनुपस्थितौ। पत्नी उपस्थिता चेत् मार्जारः इव सः'' इति।

सुनीतायाः वचनं श्रुत्वा तत्र उपस्थितौ ग्रामप्रमुखस्य उभौ सेवकौ हसितवन्तौ। ग्रामप्रमुखः अपि हसन्– ''गेहेशूरः इति पदस्य अर्थः अद्य मया सम्यक् अवगतः'' इति उक्तवान्।

अनन्तरं सः रोहिणीं सुनीतां च पृथक् आहूय बोधितवान्– ''भवत्योः वचनानि श्रोतुम् अन्यः कोऽपि न आसीत् अत्र इति तु महत् सौभाग्यम्। यदि अन्ये उपस्थिताः स्युः तर्हि भवत्यौ उपहसेयुः ते। तदा भवत्योः अपमाननम् अभविष्यत्। एवं परस्परकलहः अल्पस्य कलहस्य पर्वतीकरणं वा न शोभते। परस्परनिन्दनं परित्यज्य विवेकेन व्यवहृतं चेत् भवत्योः ग्रामस्यापि शोभा'' इति।

सुनीता रोहिणी च लज्जया शिरः अवनमय्य मौनं ततः निर्गतवत्यौ।





# उत्तमः सेवकः

एकस्मिन् ग्रामे श्यामः सोमः इति मित्रद्वयम् आसीत्। तौ निर्धनौ आस्ताम्। तयोः निश्चितः कोऽपि उद्योगः न आसीत्। अतः तौ प्रतिदिनम् उद्योगान्वेषणं कुरुतः। कदाचित् ताभ्यां ज्ञातं यत् पार्श्वग्रामस्थे भूस्वामिनः गृहे उद्योगावकाशः अस्ति इति।

अनन्तरम् एकस्मिन् दिने प्रातः उत्थाय तौ द्वौ अपि भूस्वामिनः गृहं गतवन्तौ। तत्र द्वारे कश्चन सेवकः आसीत्। सः सेवकः अन्तः गत्वा भूस्वामिनं दृष्ट्वा आगत्य उक्तवान्– "सोमवासरे आगन्तुं सूचितवान् भूस्वामी" इति।

तौ निराशया प्रतिगतवन्तौ। "सोमवासरे यत् वक्तव्यम् अस्ति, तत् अद्यैव उक्तं चेत् किं नष्टम् अभविष्यत्" इति सोमः उक्तवान्।

"पश्यामः– सोमवासरे किं भविष्यति इति" इति उक्तवान् श्यामः।

सोमवासरे उषःकाले एव उत्थाय श्यामः सोमस्य गृहं गतवान्। सोमः निद्रां कुर्वन् आसीत्। श्यामः– "भूस्वामिनः गृहं गन्तुं प्रस्थितः अहम्, आगच्छतु" इति सोमम् उक्तवान्।

तदा सोमः– "इदानीमेव का त्वरा? मन्दं गच्छाव" इति उक्तवान्।

"अहं तु प्रस्थितः। भवान् मन्दम् आगच्छतु" इति उक्त्वा गतवान् श्यामः।

एकघण्टानन्तरं सोमः उत्थाय प्रातर्विधिं समाप्य भूस्वामिनः गृहं गतवान्। गमनानुक्षणं भूस्वामिनः दर्शनं भवेत् इति तस्य विश्वासः न आसीत्।

प्रातःकाले एव आगतं श्यामं दृष्ट्वा तत्रत्यः सेवकः भूस्वामिनं निवेदितवान्। "एकः एव आगतवान् वा? द्वितीयः किमर्थं न आगतवान् इति पृष्ट्वा आगच्छतु" इति

सेवकम् उक्तवान् भूस्वामी।

"सोमः किञ्चित् विलम्बेन आगच्छामि इति उक्तवान्। अचिरादेव आगच्छेत् सः" इति सेवकम् उक्तवान् श्यामः।

किञ्चित्कालानन्तरं तत्र आगतः सोमः श्यामम् उक्तवान्– "मया पूर्वमेव उक्तं किल? मत्तः पूर्वमेव आगत्य भवता किं साधितम् अत्र?" इति। श्यामः मौनं स्थितवान्।

किञ्चित्कालानन्तरं भूस्वामी बहिः आगतवान्। द्वौ अपि नमस्कृतवन्तौ।

"उद्योगं प्रष्टुम् आगतवन्तौ भवन्तौ एव वा? भवतु, इदानीं गत्वा परश्वः बुधवासरे अस्मिन् एव समये आगच्छताम्" इति उक्त्वा गृहस्य अन्तः गतवान् भूस्वामी।

आगमनस्य प्रयोजनं किमपि न जातम् इति वदन्तौ द्वौ अपि गृहं प्रति प्रस्थितौ।

बुधवासरे प्रातः श्यामः एकः एव भूस्वामिनः गृह गतवान्। सोमः अनिच्छन् एव मध्याह्नसमये भूस्वामिनः गृहं प्रति प्रस्थितः। भूस्वामी गृहम् आगताय श्यामाय भोजनं दत्त्वा "श्वः सायम् आगच्छतु" इति उक्त्वा प्रेषितवान्। श्यामः गृहं प्रस्थितः। मार्गे सोमः मिलितवान्। श्यामः भूस्वामिनः गृहे प्रवृत्तं सर्वम् उक्तवान्। तदा सोमः उक्तवान्– "एवमेव भवेत् इति अहं चिन्तितवान् आसम्। एतदर्थं पुनः श्वः सायं गन्तव्यम् वा?" इति।



"गमनेन किं नष्टं भवति? भवन्तम् अपि आगन्तुं सूचितवान् अस्ति भूस्वामी। आवयोः तु उद्योगः आवश्यकः। भूस्वामी एव आह्वयति चेत् आवाभ्यां गन्तव्यम्। तत् एव उचितं भवति। मुहूर्तादिविषये तस्य विश्वासः स्यात्" इति उक्तवान् श्यामः।

"श्वः सायं पश्यावः। पुनः आगच्छतु इति भूस्वामी वदति चेत् आवाभ्यां न गन्तव्यम्" इति उक्तवान् सोमः। अनन्तरदिने सायङ्काले द्वौ अपि मिलित्वा भूस्वामिनः गृहं गतवन्तौ। तौ दृष्ट्वा सेवकः भूस्वामिनः समीपे सम्भाषणं कृतवान्, पुनः बहिः आगत्य उक्तवान्– "भवतोः कार्यविषये श्वः प्रातः सम्भाषणं करोमि। अतः अस्यां रात्रौ भवद्भ्यां द्वाभ्यामपि अत्रैव स्थातव्यम् इति

भूस्वामी उक्तवान् अस्ति'' इति।

तदा कुपितः सोमः भूस्वामिनः सेवकं दृष्ट्वा– ''कार्यं किमपि नास्ति। गच्छताम् इति पूर्वम् एव वक्तुं शक्यम् आसीत् किल!'' इति उक्त्वा कोपेन गृहं प्रति प्रस्थितः।

किञ्चित्कालानन्तरं सेवकः अन्तः गत्वा भूस्वामिनः सकाशात् धनम् आनीय श्यामाय दत्त्वा उक्तवान्– ''वस्त्रापणं गत्वा एतेन धनेन एकं वस्त्रकटं, एकम् आच्छादकं च आनेतुम् उक्तवान् अस्ति भूस्वामी'' इति।

श्यामः वस्त्रापणं गत्वा सेवकेन उक्तानि वस्तूनि आनीय दत्तवान्, अवशिष्टं धनमपि प्रत्यर्पितवान्। तदा सेवकः उक्तवान्– ''भवतः निमित्तमेव एतानि वस्तूनि भूस्वामिना आनायितानि। अतः शयनार्थम् एतानि स्वीकरोतु भवान्'' इति। अनन्तरं श्यामः तत्रैव भोजनं कृत्वा, वस्त्रकटम् आच्छादकं च स्वीकृत्य प्रातःकालपर्यन्तं सुखनिद्रां कृतवान्।

अनन्तरदिने प्रातःकाले भूस्वामी बहिः आगत्य श्यामं उक्तवान्– ''श्याम, भवतः व्यवहारेण अहं सन्तुष्टः अस्मि। प्ररह्यः सोमवासरात् आरभ्य भवान् अत्र उद्योगित्वेन नियुक्तः। तद्दिनादारभ्य मया यथा उक्तं तथैव कृतवान् भवान्। भवते योग्यं वेतनं दास्यामि। भवतः कार्यम् किम् इत्युक्ते मम अधीने केचन ग्रामाः सन्ति। तत्र सर्वत्र गत्वा भवता करधनं सङ्ग्रह्य आगन्तव्यम्। अतीवसहनया इदं कार्यं करणीयम्। कोपः तिरस्कारः वा न प्रकटनीयः। एतत् कार्यम् उत्तमरीत्या यदि करोति, तर्हि भवतः वेतनम् अधिकं करोमि'' इति।

श्यामः उद्योगं प्राप्तवान् इति ज्ञात्वा सोमः पश्चात्तापम् अनुभूतवान्। अनन्तरं श्यामः एव भूस्वामिनं प्रार्थितवान् यत् मम मित्राय सोमाय अपि कश्चन उद्योगः दातव्यः इति।

तत् श्रुत्वा भूस्वामी सोमम् आहूय उक्तवान्– ''अद्य आरभ्य भवान् मम उद्यानरक्षणकार्यं करोतु'' इति। एतेन सोमः अपि सन्तुष्टः।



# प्रकृतिवैचित्र्याणि–



## अरुणः राजहंसः

फ्लामिङ्गोसुनाम्ना प्रसिद्धः जातिविशेषे जातः कश्चन राजहंसः अरुणवर्णेन शोभते। किन्तु तस्य वास्तविकः वर्णः न अरुणः। सः अल्पाकारकान् नीलपीतकीटान् खादति। यदा ते कीटाः जीर्णाः भवन्ति तदा रक्तवर्णत्वं प्राप्नुवन्ति। अतः एव राजहंसस्य वर्णः अरुणः इव भासते। एवं च एतज्जातीयस्य राजहंसस्य आहारः एव शरीरवर्णस्य निर्णायकः भवति।

## चित्रोष्ट्रवैशिष्ट्यम्

४-५ अङ्गुलदीर्घस्य अल्पस्य मूषकस्य पृष्ठास्थि सप्तभिः खण्डैः युक्तम् भवति। चित्रोष्ट्रस्य कण्ठः तु ७ द्वादशाङ्गुलदीर्घः भवति। एवं तर्हि चित्रोष्ट्रस्य कण्ठे अस्थिखण्डाः किम् अधिकाः? न तथा। तत्रापि सप्त एव अस्थिखण्डाः। चित्रोष्ट्रस्य अन्यत् वैशिष्ट्यं यत् तदीया जिह्वा १८ अङ्गुलदीर्घा भवति। मानवानां जिह्वायाः सामान्यं दैर्घ्यं ३ अङ्गुलमितम्। चित्रोष्ट्रः अश्वापेक्षया अधिकेन वेगेन धावितुं शक्नोति। आश्चर्यं नाम एतस्य धावनसमये शब्दः न उत्पद्यते।





## दीर्घजीवी वृक्षः

भवद्भिः 'कान्स्टेबल् ट्री' विषये किमपि श्रुतं वा? १५ शतकस्य आरम्भे फ्रान्स्देशं प्रति नीतः लकुचजातीयस्य वृक्षस्य एव एतत् नाम। एषः वृक्षः ४७० वर्षेभ्यः जीवति। सामान्यतः लकुचवृक्षाः शतं वर्षाणि यावत् जीवन्ति, तावदेव।

# पुस्तकम् आनेतव्यम् आसीत्

| | |
|---|---|
| पिता- नटेशास्य गृहं गत्वा आगतवान् वा? | You had been to Natesh's house? |
| पुत्रः- परह्यः सायं गतवान् आसम्। तदीयं गृहं कीलितम् आसीत्। | I went in the evening day before yesterday. But the house was locked. |
| पि- पुनः कदाचिदपि न गतवान् वा? | You did not go again? |
| पु- पुनः तु न गतवान्। | No, I didn't. |
| पि- ततः पुस्तकं त्वरया आनेतव्यम् इति उक्तवान् आसं खलु अहम्? | I told you we have to get the book from his house soon. |
| पु- त्वरा अस्ति इति मां तु न उक्तवान् भवान्। | You never told me it was urgent. |
| पि- वस्तुतः तत् पुस्तकं अद्य एव मया ग्रन्थालये प्रत्यर्पणीयम् आसीत्। | Strictly speaking, it should have been returned to the library today. |
| पु- अहं तु सम्यक् स्मरामि – त्वरा अस्ति इति भवता न उक्तम् एव। | I am very clear you never told me that it was urgent. |
| पि- अस्तु, इदानीं गत्वा आनयति वा? | OK. Will you go and get it now? |
| पु- इदानीं वा? नटेशः गृहे भवेत् वा न वा? | Now? I do not think Natesh will be at home now. |
| पि- इतोऽपि नववादनम्। नटेशः एतावता कार्यालयं गतवान् न स्यात्। सः कार्यालयं गतवान् चेदपि चिन्ता नास्ति। तद्गृहसदस्यः कोऽपि पुस्तकं दद्यात्। | It is only 9 in the morning. Natesh would not have left for the office. Even if he has left there would be no problem. Anybody in his house can give you the book. |
| पु- द्विचक्रिकायां वायुः नास्ति। | There is not enough air in the cycle tyre. |
| पि- पादाभ्यां गत्वा आगच्छतु भोः। तदर्थं दश निमेषाः अलम्। | Go walking! It will take just 10 minutes. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अचिरात् - Soon
अतीतः - Was over
आच्छादकम् - Blanket
आजीवनम् - Lifelong
आन्तम् - Till the end
आवुत्तः - Brother-in-law
इतिकर्तव्यता - A sense of discretion
उपलेपनम् - Overlay
कर्कटकः - Crab
कक्षः - Armpit
कुञ्चीयनम् - To wind
क्षुतम् - Sneeze
क्षेप्तुम् - To throw
चित्रोष्ट्रः - Giraffe
छिन्नवान् - Tore
जल्पनम् - Gossiping
जायमानः - Going on
द्रवति - Melts
ननान्दा - Husband's sister
नस्यम् - Snuff (Powder)
निर्वोढव्यः - Should carry out
निष्पन्दम् - Motionless
पत्रकारः - News reporter
परिविष्टम् - Served (food)
पाञ्चालिका - Doll
प्रतिवेशिनी - Neighbouring woman
बधिरः - Deaf
भूतपूर्वः - Formerly
मार्जारः - Cat
लकुचः - A kind of lime fruit
वस्त्रकटः - Carpet
वस्त्रापणः - Cloth shop
विदारितम् - Slit into two
वैधव्यम् - Widowhood
शासनम् - Administration
सीवनम् - Stitching
स्थानान्तरणम् - Transfer
स्थौल्यम् - Fatness

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां अगस्ट्-९२ मासे प्रकटयिष्यामः।**



M. Natarajan



M. Natarajan

* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'एप्रिल्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **बालकौ निराधारौ मृगयतः आहारम्।**

द्वितीयचित्रम् - **बालः कर्णधारः तारयति महार्णवम्।**

प्रेषकः - चि. प्रकाश कुलकर्णि, द्वारा— श्री म.व. काळे, श्रीदेशिकेन्द्रविद्यालयः, लातूरु-४१३५१२




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---



CASIO
ताल मिलाओ धूम मचाओ!
© 1991 CASIO
SOUND KIDS
अब झूमिए मस्ती में कैसिओ कीबोर्ड के साथ, क्योंकि इसमें है सुर और ताल का ऐसा अनोखा मेल कि आपका दिल गा उठे और कदम थिरकने लगें अपनी मनपसन्द धुनों के साथ। तो बस शुरू हो जाइये और फैला दीजिये अपनी मस्ती का रंग और कैसिओ की उमंग, चारों ओर!
RAP-1
32 मिनी कीज़ ● 25 पी सी एम प्रीसेट टोन्स ● 30 रैप पैटर्न्स ● बिल्ट इन "स्क्रैच" डिस्क ● वॉइस इफ़ैक्टर फ़ंक्शन ● 3 बिल्ट इन इफ़ैक्ट पैड्स ● मिनी माइक्रोफ़ोन अटैच्ड
SA-21
32 मिनी कीज़ ● 100 पी सी एम प्रीसेट टोन्स ● 19 पी सी एम ऑटो रिद्म्स ● 13 "सुपर एकम्पनीमेन्ट" बैकिंग पैटर्न्स ● 5 बिल्ट इन ड्रम पैड्स ● 5 प्रीसेट डिमान्सट्रेशन ट्यून्स ● ड्यूल स्पीकर सिस्टम
KS-02
32 मिनी कीज़ ● 8 पी सी एम प्रीसेट टोन्स ● आर ओ एम पैक कम्पैटिबल ● मैलोडी गाइड फ़ंक्शन ● 5 बिल्ट इन साउन्ड इफ़ैक्ट पैड्स ● 6 बिल्ट इन डिमॉन्सट्रेशन ट्यून्स ● मिनी माइक्रोफ़ोन अटैच्ड ● कैरिंग हैंडल

